# श्रीमद्रहस्यत्रयसारसङ्ग्रहः

॥ श्रीः॥

## विज्ञापनम्

इदं प्रपत्तिशास्त्रं श्रुतिस्मृतीतिहासपुराणागमभाषाप्रबन्धप्रमुखसकलशास्त्रसारसङ्ग्रहरूपं श्रीमद्भिः सर्वैरपिपूर्वाचार्यैः विस्तरेण प्रकाशितं कालदेशसन्दर्भानुसारेण निखिलजिज्ञासुमनुजसाधारणं संक्षिप्य सङ्गृहीतम् ।

शास्त्रमिदमीश्वरं दयामयं सकलजगद्रक्षकमनालोचितविशेषाशेषलोकशरण्यमभ्युपगच्छतां सर्वेषां दार्शनिकानां सम्मतमतीवादरणीयं चेत्येतन्निर्विवादम् ।

प्रपत्तिर्नाम-----

अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् ।

तदेकोपायता याच्ञा प्रपत्तिश्शरणागतिः ॥ इति ॥

सेयं प्रपत्तिः चतुर्विधानामपि पुरुषार्थानां साधनभूता । अत्र देशजातिकुलगोत्रवर्णाश्रमादिविशेषानालोचनेन उपायान्तराशक्तिरूपाकिञ्चन्यमात्रसमालोचनेन प्राणिमात्रस्याधिकारः ।

सैषा स्वनिष्ठा उक्तिनिष्ठा आचार्यनिष्ठेति अधिकारिभेदेन त्रिविधा । सदाचार्योपदिष्टमन्त्रमन्त्रार्थविशदज्ञानपूर्वकं भगवति भरसमर्पणं प्रथमा ॥ एवं विशदतमज्ञानविधुराणां महाविश्वासशालिनां शरण्यविज्ञेयपूर्णप्रपत्तिगर्भेण सदाचार्योपदिष्टेन वाक्येन "मद्रक्षणं तवैवभरतया स्वीकरणीयमि"ति भगवति प्रार्थना मुग्धसामन्तकुमारस्य सार्वभौमसमीपे धात्र्यादिसमुपदिष्टवाक्येन रक्षकान्तरशून्योऽहं भवन्तं शरणमुपगत इति प्रार्थनावत् द्वितीया ॥ तृतीया तु ---- आचार्यस्यात्मात्मीयसमर्पणे शिष्याद्यात्मरक्षाभरसमर्पणस्याप्यन्तर्भावः । शिष्याद्यर्थमाचार्यस्य पृथगनुष्ठानं वा ॥
कथञ्चित् एवं प्रपन्नानामेव मोक्ष इति शास्त्रार्थः ।
इति सतां विधेयः
लक्ष्मीपुरं श्रीनिवासदासः ।

**[** ग्रन्थोयं ईसवीये १९३७तमे वर्षे तेलुगुलिप्यां मुद्रितः प्रकाशितश्च २०२२तमे वर्षे देवनागरीलिप्यां पुनष्टङ्कितश्च । पुस्तिका जीर्णा क्वचित् कृमिजग्धा रन्ध्राविला आसीत् । अनधीतशास्त्रस्य पुनष्टङ्कणकर्तुः दोषाः विद्वद्भ्यः क्षन्तव्याः । क्वचित् **(?)** प्रश्नचिह्नाः दृश्यन्ते । ते पदस्य अर्थस्य वा सन्दिग्धतां निर्दिशन्ति **]**

श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमद्रहस्यत्रयसारसङ्ग्रहप्रारम्भः

# प्रथमः परिच्छेदः

आदौ गुरुपरम्परासारः

अथातः श्रीमद्रहस्यत्रयसारब्रह्मविद्यां संगिघृक्षामो विशिष्ट्यैकार्थ्यसंसिद्धये । तामेतां विद्यां ज्ञातुमिच्छुः मुमुक्षुः सदाचार्यपरम्परामनुसन्दधीत । आचार्यवत्त्वमेव हि सर्वेषां मोक्षकारणम् । सा च आचार्यपरम्परा स्वाचार्यमारभ्य सर्वेश्वरमभिव्याप्नोति । स हि सर्वेश्वरः सर्वेषां लोकानां परमाचार्यः । यतः खलु असौ पुरा सर्वाननुजिघृक्षुः हंस-मत्स्य-हयग्रीव-नरनारायण-गीताचार्याद्यवतारैः साक्षात् चतुर्मुख-सनक-सनत्कुमार-नारद-पराशर-वाल्मीकि-शुक-शौनकादिभिः परम्परया च अध्यात्मविद्यामिमामतिमहतीं प्रवर्तयामास । प्रतिष्ठापयामास च तामेतामविप्लवं पराङ्कुश-परकाल-मधुरकवीश्वरमुनि-नाथमुनि-यामुनमुनि-रामानुजमुनि-प्रभृतिभिः आचार्यैः । तस्मात् प्रशस्ततमा इयं विद्या सदाचार्यैः सच्छिष्येभ्य एव उपदेष्टव्या । तेपि शिष्याः कृतज्ञतमाः सन्तः तामेतां गुरुपरम्परां भजेरन् सर्वदा अनुसन्दधीरन्श्च ।

## १. उपोद्घातः

एवं परमाचार्यभूतस्य सर्वेश्वरस्य श्रियःपत्युः परमात्मनः हृदयङ्गमः पुत्रः शिष्यः प्रेष्यः शेषभूतो दासभूतश्च इत्येष जीवात्मा तत्तच्छास्त्रैः स्फुटमवधार्यते । तथास्वाभाविकशेषिणः अखिलहेयप्रत्यनीककल्याणगुणगणस्य उभयविधविभूतिनाथस्य सर्वेश्वरस्य दिव्यमहिषीपरिजनपरिच्छद्वानितस्य दिव्यलोके निरतिशयमानन्दमनुभवतः एतादृशमैश्वर्यवन्तमानन्दरूपमात्मानम् सर्वेऽपि जीवात्मानः सदा अनुभूय कृतार्था भवेयुरिति सौहार्दशालिनो भगवतः सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्येषु स्वरूपयोग्यतावत्तया नित्यसूरिरिव दायभाग्यपि जीवात्मासौ अनादिमायया सुप्तः मरुकान्तारे परिभ्रमन् तत्त्वहितविषयकयथावत्प्रकाशरहितः मृगयासक्तनृपतिकुलपरिभ्रष्टशबरकुलप्रविष्टराजकुमारवत् स्वाभाविकं स्वस्वरूपं विस्मृत्य औपाधिकं परस्वरूपमात्मनि आरोप्य बभ्राम ।

सत्यां एवं स्थितौ केचिद्धार्मिकाः सदुपदेशानुष्ठादिना स्वस्वरूपानुगुणवृत्तानि समुपदिश्य स्वरूपानुरूपातिशयितपुरुषार्थरुचिं हेयोपादेयविभागक्षमतां च सम्पादयन्ति अस्य जीवस्य, राजकुमारलक्षणादिना जातिविशेषं विजानन्तः कारुणिका इव राजकुमारस्य ।

ततश्च अस्य चेतनस्य स्वाभाविकं भगवच्छेषत्वं यादृच्छिकानुषङ्गिकप्रासङ्गिकादिसुकृतविशेषमूलकं सहजकरुणाकटाक्षविषयत्वं धार्मिकमूलकमास्तिक्यं हेयोपादेयविभागक्षमत्त्वं अद्वेषाभिमुख्यादिकं च अनुरूपमवलोकयन्तः परमकारुणिकेन परमशेषिणा प्रेरिताः कारुणिकोत्तमाः केचिदाचार्याः स्वाभाविकं भगवत्सम्बन्धमुपदिश्य भगवत्प्राप्त्युपायाभिनिवेशमुत्पाद्य तदीयं प्रयोजनमेव परमं स्वयंप्रयोजनं मन्यमानाः सद्यःसमुत्पन्नवत्सेषु धेनव इव स्निह्यमानाः अज्ञानसंशयविपर्ययनिवर्तकानि दिव्यसुभाषितान्युपदिशन्ति ।

ततस्तादृशसुभाषितान्यवलम्ब्य ईश्वरेशितव्ययोः स्वरूपस्वभावसम्बन्धाः भोगापवर्गयोश्च त्याज्योपादेयाः स्वरूपोपायगतिप्रकाराः उक्तानुक्तविरोधिनश्च इत्येते अर्था अवश्यं ज्ञातव्या मुमुक्षुणा । त एते सर्वेप्यर्थाः अध्यात्मविषयकशब्दराशौ सारतमे रहस्यत्रये प्रतितन्त्रसारोद्धारेण सङ्गृह्यन्ते ।

## २. सारनिष्कर्षः

अथ निरतिशयपरमपुरुषार्थः तदुपायश्च प्रत्यक्षानुमानाभ्यां दुरधिगमः शब्दैकसमधिगम्यश्च । तत्र च शब्दसंदोहे बाह्यकुदृष्टिशास्त्रसमुदायः अत्यन्तासारतया अनुपादेयः । वेदेऽपि पूर्वभागे ऐहिकफलसाधनस्य कर्मणः प्रतिपादकोंऽशः अल्पसारतया अनुपादेयः । तत्रैव आमुष्मिकफलसाधकभागस्तु ऐहिकसुखादतिशयितस्य सुखस्य अवबोधितया केषाञ्चित् सारत्वेन प्रतीयमानोऽपि दुःखमूलत्वदुःखमिश्रत्वदुःखोदर्कत्वादिदोषदुष्टसुखावबोधितया अनुपादेय एव ।

उत्तरे भागे स्वात्मानुभवमात्रसाधनप्रतिपादकांशः सारतरोऽपि निरतिशयपरमात्मानुभवापेक्षिणामनुपादेयः । तस्मात् परमात्मप्राप्तितदुपायानां प्रतिपादकोंऽश एव सारतमः विवेकिनामुपादेयः।

तत्रापि रहस्यत्रयमिदं सुतरां सारतमम् । तत्र प्रथमरहस्यं स्वार्थविज्ञानेन सर्वार्थविज्ञानसंपादकतया द्वितीयं सकृदुच्चारणमात्रेण कृतकृत्यताकरणप्रभाववत्तया तृतीयं पुनःस्वेनविधीयमानस्यैवैकस्य उपायस्य सर्वोपायफलसाधनत्वव्यवस्थापकतया च प्रधानप्रतितन्त्रतत्त्वहितानां संग्राहकमिदं त्रयमेव अत्यन्तमादरणीयम् ।

## ३. प्रधानप्रतितन्त्रः

प्रधानप्रतितन्त्रो नाम प्रधानो मुख्यः इतरसिद्धान्तिभिः अनङ्गीकृतः स्वसिद्धान्तमात्रसिद्धः अर्थविशेषः । स च जगदीश्वरयोः शरीरात्मभावसम्बन्धादिः । ईश्वरस्य शरीरित्वं नाम चेतनाचेतनद्रव्यं प्रति नियमेन धारकत्वं नियन्तृत्वं शेषित्वं च । चेतनाचेतनद्रव्यस्य शरीरित्वं तु ईश्वरनिरूपितं धार्यत्वं नियाम्यत्वं शेषत्वं च ।

तत्र धारकत्वं स्वरूपेण त्रिविधचेतनाचेतनसत्तास्थितिप्रवृत्तिप्रयोजकत्वं - तथा हि–परमेश्वरः स्वस्वरूपकधर्मानिव निरूपितस्वरूपधर्मानिव स्वव्यतिरिक्तसमस्तद्रव्याणि साक्षात्स्वरूपेण बिभ्रति । तत्तद्द्रव्याश्रितगुणान्स्तु तत्तद्द्वारेति । तत्तज्जीवैर्ध्रियमाणानि शरीराणि तु तत्तज्जीवद्वारा धरतीति केचिदाचार्याः तत्तज्जीवद्वारा साक्षादपि च इत्यपरे एवं च स्वव्यतिरिक्तं सर्वं वस्तु स्वस्वरूपं प्रति पृथक्सिद्धविशेषणमित्यस्य सर्वस्यापि सत्तास्थितिप्रवृत्तयः आश्रयसत्तानिर्वाहयाः ।

अथ नियन्तृत्वं स्वसङ्कल्पेन सर्ववस्तुसत्तास्थितिप्रवृत्तिप्रयोजकत्वम् । तथा हि- अनित्यानां वस्तूनाम् अनित्येच्छोत्पन्नत्वं नित्यानां नित्येच्छासिद्धत्वं च सत्तायां सङ्कल्पाधीनत्वम्, एवं सत्तानुवृत्तिरूपा स्थितिः प्रवृत्तिश्च ईश्वरसङ्कल्पाधीना एव । सर्वमीश्वरसङ्कल्पाश्रितम् ईश्वरसङ्कल्पविधृतम् इति च कथयतां शास्त्राणां च अत्रैव तात्पर्यम् ।

तर्हि सर्ववस्तूनां सत्तास्थितिप्रवृत्तिषु सङ्कल्पमात्रेण सम्पत्स्यमानासु सतीषु किं स्वरूपेणेति ? उच्यते –सङ्कल्पः सर्वाणि वस्तूनि परमात्मस्वरूपाश्रितानि करोति । तस्मात्सर्वसत्तास्थितिप्रवृत्तयः सङ्कल्पाधीनाः स्वरूपाश्रिता इति निष्कर्षः ।

यथा - लोकेपि शरीरं शरीरिणः स्वरूपाश्रितं सङ्कल्पाधीनं च पश्यामः । जीवस्थितौ सत्यां शरीरसत्ता, जीवस्थित्यभावे शरीरानवस्थितिरित्यन्वयव्यतिरेकात् शरीरं स्वरूपाश्रितम् । अयमर्थः सुषुप्त्याद्यवस्थासु सुस्पष्टं विज्ञायते । जाग्रद्दशायां सङ्कल्पेनाधःपतनमन्तरेणावस्थापनसंभवात् सङ्कल्पाधीनमित्यपि । अत्र स्वरूपाश्रितत्वं वस्तूनामाधेयत्वं सङ्कल्पाधीनत्वं नियाम्यत्वमिति विशेषः ।

तथा परमेश्वरः सर्वं पारार्थ्यैकस्वभावं वस्तुजातं स्वप्रयोजनायैव उपादत्ते, ततश्च अतिशयवान् भवतीति सर्वशेषीत्युच्यते, तत्प्रतियोगित्ववत् सर्वं वस्तु शेषभूतमित्युच्यते ।

अनेन आधाराधेयभावेन अन्यचेतनस्य भगवदीयज्ञानशक्त्यादेरिव अपृथक्सिद्धस्वरूपलाभः फलति । शेषशेषिभावेनात्माभिमानानुगुणपुरुषार्थव्यवस्थाप्रकारेण शेषत्वस्वरूपानुरूपे शेषिविषयकशेषभावरूपे पुरुषार्थे अभिरुचिश्च फलति । नियन्तृनियाम्यभावेन तु स्वरूपानुरूपपुरुषार्थानुरूपस्य निरपेक्षस्य उपायविशेषस्य अवगमश्च फलति । एवं च अयं चेतनः अनन्याधारः अनन्यप्रयोजनः अनन्यशरणश्च इति सिद्धम् ।

अत्र शेषत्वशेषित्वे चेतनाचेतनसाधारणधर्मौ दासत्व स्वामित्वे तयोर्विशेषाचेतनैकान्तौ, तेषामयं निष्कर्षः। स्वपरमप्रयोजनभूत-परगतातिशयाधायकत्वं शेषत्वम् । स्वपरमप्रयोजनभूतस्वप्रतिसन्धानार्ह-परगतातिशयाधायकत्वं दासत्वम् । शेषत्वाभिमतप्रयोज्यप्रयोजनभूतातिशयभाक्त्वं शेषित्वम् । शेषित्वाभिमतप्रयोज्य-परमप्रयोजनभूत-स्वपुरुषार्थातिशयभाक्त्वं स्वामित्वमिति ।

अस्य चेतनस्य रक्षणविषये परमेश्वरः निरुपाधिकशेषित्वात् प्राप्तः, निरुपाधिकनियन्तृत्वाच्च शक्तः, स्वयं तु निरुपाधिकशेषत्वादप्राप्तः निरुपाधिकनियाम्यत्वात् विना ईश्वराधीनप्रवृत्तिक असमर्थश्च । लोकेपि निरुपाधिकस्वामी समर्थश्च स्वीयस्य असमर्थस्य वस्तुनो रक्षणे स्वतः प्राप्तः । अथाप्यसावीश्वरः कर्मवश्यानिमान् चेतनान् कस्मिंश्चिदुपायविशेषे प्रवृत्तिमुत्पाद्यैव रक्षतीति स्वसङ्कल्पनियतं नातः सर्वमुक्तिप्रसङ्गः इति ।

## ४. अर्थपञ्चकम्

एवमीश्वरनिरूपितम् ईशितस्य संभविनम् आधेयत्व-विधेयत्व-अपृथक्सिद्धत्व-शेषत्व-शरीरत्व-व्याप्यत्व-रक्ष्यत्व-किङ्करत्व-भोग्यत्व-भोक्तृत्वलक्षणं दशविधं सम्बन्धमुपजीव्य पञ्चार्थान् विचारयन्ति तत्त्वविदः । ते च प्राप्यः प्राप्ता प्राप्त्युपायः प्राप्तिः प्राप्तिविरोधी चेति ।

तत्र प्राप्यः---सर्वशास्त्रैककारणम् सकलजगत्सृष्ट्यादिव्यापारशीलः अपरमितज्ञानानन्तैकस्वरूपः अखिलहेयप्रत्यनीकः प्राप्यत्वप्रापकत्वोपयुक्तज्ञानशक्त्याद्यनन्तकल्याणगुणगणः शरीरभूतशुद्धाशुद्धविभूतिद्वययुक्तः परव्यूहादिपञ्चप्रकारदिव्यमङ्गलविग्रहोपेतः सर्वास्ववस्थासु सहधर्मचारिण्या श्रिया अविनाभूतः सर्वलोकशरण्यः शरणागतवत्सलः सर्वप्रकारनिरतिशयभोग्यः परब्रह्माभिधानः पुरुषोत्तमो नारायणः ।

प्राप्ता ---देहेन्द्रियादिविलक्षणः स्वयंप्रकाशः स्वस्मै भासमानः बद्धमुक्तसाधारणैः भगवत्कैङ्कर्यरूपयोग्यताज्ञानफलकैः ज्ञानत्व-आनन्दत्व-अमलत्व-अणुत्वादिरूपैः उपायाधिकार्यसाधारणैः उपायानुष्ठानयोग्यताज्ञानफलकैः शेषत्वपारतन्त्र्यादिरूपैश्च धर्मैः सहितः परशेषतैकरसः पराधीनस्वरूपस्थितिप्रवृत्तिकः परिपूर्णभगवदनुभवयोग्यः स्वरूपानुगुणस्वच्छन्दकैङ्कर्याभिलाषी जीवात्मा ।

प्राप्त्युपायः --- संसारसागरोत्तरणाय साधनतया स्वबुद्ध्या अपेक्षणीयः शास्त्रप्रतिपादितः अर्थः ।

स च द्विविधः सिद्धोपायः साध्योपायश्चेति। तत्र आद्यः–नित्यसिद्धस्वरूपगुणसहितः सर्वज्ञतया परहितवेदी सर्वशक्ततया सर्वानिष्टनिवारणक्षमः सर्वभूतनिसर्गसुहृत्तया सर्वानिष्टनिवारणे सदाभिमुखः अवसरप्रतीक्षः व्याजविशेषवशीकरणीयः सङ्कल्पविशेषसहकारिनिरपेक्षः स्वार्थप्रवृत्तः मोक्षप्रदानाव्यवहितकारणः सङ्कल्पाश्रयः श्रियःपतिः ।

साध्योपायस्तु सामान्यतः पुरुषेण अनुष्ठेयतया शास्त्रचोदितं पुरुषार्थसाधनम् । मोक्षार्थसाध्योपायस्तु भक्तिः प्रपत्तिश्चेति द्विविधः । तत्र भक्तिः- कर्मयोगज्ञानयोगसंस्कृतान्तःकरणसाध्या अष्टाङ्गयोगयुक्ता वर्णाश्रमधर्म-इतिकर्तव्यताका तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपा अहरहरभ्यासाधेयातिशया आप्रयाणमनुवर्तनीया प्रारब्धेतरपुण्यपापनिवहरिक्ता स्वयत्नसाध्या अन्तिमप्रत्ययविशेषलक्षणा ।

प्रपत्तिस्तु ---महाविश्वासादिसंस्कृतान्तःकरणसाध्या षडङ्गयोगसंज्ञिता अनन्योपायसर्वाधिकारिका अनुकूल्यसङ्कल्पादिमात्रपरिकरवती सुकरा प्रार्थनान्वितसकृद्भरन्यासरूपा अनाधेयातिशया आदेहपातं स्वस्वरूपावृत्त्यादिकर्तव्यविशेषरहिता प्रारब्धकर्मनिवर्तनक्षमा स्वयत्नसाध्या अन्तिमप्रत्ययनिरपेक्षा ।

अथ प्राप्तिः ----स्वाधिकारानुगुणवशीकरणविशेषेणोत्तरपूर्वघाश्लेषविनाशवतः श्थूलशरीरवियोगपूर्वकेण ऊर्ध्वगतिविशेषेण समुत्क्रान्तस्य अर्चिरादिमार्गेण अतिवाहकैः अतिवाहितत्रिगुणमण्डलस्य अवधूतसूक्ष्मशरीरस्य अप्राकृतं देशमधिगतवतः आविर्भूतस्वरूपस्य अपहतपाप्मत्वादिगुणाष्टकविशिष्टस्य पूरुषधौरेयस्य देशकालपरिच्छेदरहितसर्वविधकैङ्कर्यपर्यन्तपरिपूर्णब्रह्मानुभवः ।

प्राप्तिविरोधी तु – बीजाङ्कुरन्यायेन अनादितया प्रवृत्तेन अकृत्यकरणकृत्याकरणप्रवाहेन सञ्जातः प्रायश्चित्तः धुराणामनतिलङ्घनीयफलः आगमैकसमधिगम्यः अनुपेक्षणीयविपाकसमयः आब्रह्मस्तम्बपर्यन्तं अभिव्याप्तः अत्यन्तविषमप्रवाहः अतिघोरनरकाद्यनर्थपरंपराहेतुभूतः चक्रवत्परिवर्तमानः कार्यकारणवर्गसहितः सन्तन्यमानो भगवन्निग्रहः ।

तस्य चायं विस्तरः

असौ खलु विग्रहः चैतन्यसङ्कोचकरत्रिगुणात्मकप्रकृतिसंसर्गविशेषमुत्पाद्य प्रकृतिपरिणामविशेषैः शरीरादिभिः सम्बन्धं च जनयित्वा चेतनान् तत्परतन्त्रान् करोति । तस्यामप्यवस्थायां शास्त्रानधिकारतिर्यगादिदशायां बहुकालमवस्थापयति । शास्त्रयोग्यमनुष्यादिजन्मस्वपि बाह्यकुदृष्टिदृष्टिभिः आकुलयति ।

तादृशमतेष्वननुप्रविष्टान्स्तु मूलप्रकृतिप्रभृतिमोहनपिञ्छिकया तत्त्वाज्ञानविपरीतज्ञानविषप्रावण्यविशिष्टान् करोति । तत एव सुखलवार्थम् अकृत्यकरणादिरूपम् आज्ञातिलङ्घनं कारयित्वा पुनरपराधपरम्परायां प्रवेश्य तत्फलतया गर्भजन्मजरामरणनरकादिचक्रपरिवृत्तौ विपरिवर्त्य क्षुद्रसुखलवसाधनराजसतामसशास्त्रमुखेन

सन्तन्यमानकर्मपाशप्रग्रथितदेवतान्तरभक्तान् विधाय तद्वितीर्णक्षुद्रपुरुषार्थैः कृतार्थाभिमानिनो व्यामोहयति ।

उपासनप्रवृत्तानपि क्षुद्रदेवतोपासनेषु सामान्यचेतनोपासनेषु वा प्रवेश्य क्षुद्रफलैरेव विफलयति । आत्मोपासकानपि प्रकृतिसंसृष्टस्य स्वस्य ब्रह्मदृष्ट्योपासने स्वरूपेण उपासने वा प्रवेश्यतानेतान् चतुर्विधान् अल्पास्वादं स्वदयित्वा पुनरावर्तयति ।

ब्रह्मात्मकस्वात्मोपासकप्रवृत्तान् स्वात्मशरीरकब्रह्मोपासनप्रवृत्तान्श्च अन्तरायभूतेन स्वात्मानुभवेन अष्टैश्वर्यसिद्ध्या वा वस्वादिपदप्राप्त्या वा ब्रह्मकायनिषेवणादिना वा राज्याभिषेकार्थमानीयमानस्य राजकुमारस्य हस्तावलम्बनदायिन्यां भुजिष्यायां अनुरागेण गमनविलम्ब इव प्रारब्धकर्मफलभूतदेहेन्द्रियेषु तदनुबन्धपरिग्रहेषु तन्मूलभोगेषु वा अभिलाषेण विलम्बमुत्पाद्य अन्यपरान् करोति। सर्वे चैते सर्वविशेषाधीनतारतम्यवन्तोऽपि संसारिण एव ।

अथ कथं ब्रह्मोपासनप्रवृत्तानामपि भगवत्प्राप्तिविरोधी स्यादयं निग्रहः? कर्मयोगाप्रवृत्तानामपि अभिक्रमादिनाशविरहेण फलावश्यंभावस्मरणादिति; अत्रोच्यते – पुरुषाणां प्रारब्धकर्म अतिविचित्रम्, तेन कल्पान्तरे मन्वन्तरे युगान्तरे जन्मान्तरे कदा कस्य मोक्ष इति न विज्ञायते; अत्यन्तानुकूलानां वसिष्ठादीनामपि मोक्षे विलम्बोऽनुश्रूयते, अत्यन्तं प्रतिकूलानामपि क्षत्रबन्ध्वादीनां क्षिप्रं मोक्षः सञ्जात इत्यवधार्यते, तस्मात् विलम्बरहितमोक्षहेतुभूतसुकृतविशेषः कस्य अविलम्बहेतुभूतनिग्रहकारणदुष्कृतविशेषः कस्य इति एतदशक्यमवधारयितुम् । तस्मादेवम् अनिष्टपरम्परायाः निदानभूतेन आज्ञातिलङ्घनेन सञ्जातस्य भगवन्निग्रहस्य प्रधानविरोधिनः परिहरणं भगवच्चरणारविन्दयोः शरणवरणमेवेति समीचीनः सिद्धान्तः इति ॥

## ५. तत्त्वत्रयम्

अथ तत्त्वत्रयमुपव्याख्यास्यामः- तत्र आदौ प्रकृत्यात्मभ्रमस्य स्वतन्त्रात्मभ्रमस्य निरीश्वरवादरुचेश्च निरसनीयतया भोक्तृभोग्यनियन्तृरूपं चेतनाचेतनेश्वरात्मकं तत्त्वत्रयं विज्ञातव्यम् ।

सर्वस्यापि वस्तुनः स्वरूपस्थितिप्रवृत्तयः प्रमाणप्रतिनियताः । तत्र स्वरूपं स्वासाधारणधर्मनिरूपणीयो धर्मी । सैव सत्तेत्युच्च्यते । स्थितिः कालान्तरायानुवृत्तिः । सा हि ईश्वरसङ्कल्पानुगुणा नित्यवस्तुनो नित्या अनित्यवस्तुनश्च अनित्या । प्रवृत्तिस्तु व्यापारः प्रवृत्तिनिवृत्तिरूपः ।

प्रमाणं हि प्रमाजननावसरे वस्तुनः स्वरूपं स्वरूपनिरूपकधर्मान् निरूपितस्वरूपविशेषणान् अर्थक्रियाकारित्वलक्षणं व्यापारं च अवगमयति । तत्र स्वरूपं स्वनिरूपकधर्मविशिष्टमेव बोधयति । तच्च स्वरूपं स्वरूपनिरूपकधर्मपुरस्करणं विना व्याहर्तुमप्यशक्यम् । तादृशधर्मं विहाय जिज्ञासा यदा स्वरूपं शशविषाणमनुरुन्ध्यात् ।

अत्र प्रकृते चेतनस्वरूपं ज्ञानत्व-आनन्दत्व-अमलत्व-अणुत्व-आदिरूपस्वरूपनिरूपकधर्मैः निरूप्य सत्यं ज्ञानम् आनन्दम् अमलम् अणु इत्येवं प्रकारेणैव युक्तं व्यवहर्तुम् । चेतनगतमीश्वरनिरूपितम् शेषत्वं तु निरूपितस्वरूपविशेषणमिति वदन्ति । निरुपाधिकसम्बन्धरूपत्वात् सम्बन्धिस्वरूपनिरूपणमन्तरा ज्ञातुमशक्यत्वाच्च ।

स्वरूपनिरूपकधर्मश्च द्विविधः- स्वरूपमात्रप्रतिपत्त्यर्थो सजातीयविजातीयसकलेतरव्यावृत्तिप्रतिपत्त्यर्थश्च इति । तत्र शेषत्वस्य प्रथमाकारासन्भवेऽपि अणुत्वे सति चेतनत्ववत् स्वतः शेषत्वे सति चेतनत्वस्य जीवलक्षणत्वसम्भवात् द्वितीयाकारः सम्भवतीति स्वरूपनिरूपकत्वमपि वक्तुं साम्प्रतम् ।

एवं विभुत्वे सति चेतनत्वं अनन्याधीनत्वं निरुपाधिकशेषित्वमित्यादिकमीश्वरलक्षणम् । जीवेश्वररूपस्य आत्मसामान्यस्य लक्षणं चेतनत्वं प्रत्यक्त्वं च । तत्र चेतनत्वं ज्ञानाश्रयत्वं प्रत्यक्त्वं स्वस्मै स्वयं प्रकाशमानत्वम् । तथा प्रकाशवेलायां धर्मभूतज्ञाननिरपेक्षमहमित्यवभासते ।

ईश्वरव्यतिरिक्ता एते चेतनाः बद्धमुक्तनित्यरूपेण त्रिविधाः, तत्र बद्धाः अनादिकर्मप्रवाहेण अनुवृत्तसंसाराः ब्रह्मादिस्तम्बपर्यंताः क्षेत्रज्ञाः । मुक्ताः शास्त्रबोधितोपायविशेषेण सञ्जातेन भगवत्प्रसादेन अत्यन्तं विनिवृत्तसंसाराः सङ्कोचरहितेन भगवदनुभवेन निरतिशयानन्दवन्तः । नित्यास्तु अनादेः कालात् ज्ञानसङ्कोचाभावेन अस्पृष्टसंसाराः नित्यं कैङ्कर्यं कुर्वन्तोऽअनन्तगरुडविष्वक्सेनादयः ।

चेतनानां चैतेषां स्थितिरविशिष्टा, प्रवृत्तिस्तु पराधीनं परार्थं कर्तृत्वं भोक्तृत्वं च । यतश्चेश्वरः स्वभोगायैव एतेषांचेतनानां कर्तृत्वं भोक्तृत्वं चोत्पादयति ।

तत्र बद्धानां अविद्यापापकर्मवासनारुचिप्रकृतिसम्बन्धवत्त्वमन्येभ्यः स्वरूपे विशेषः । परस्परं विशेषस्तु ज्ञानसुखादितारतम्यात् प्रत्यक्षसिद्धः ।एते च बद्धाः स्वकर्मानुगुणानि ईश्वरदत्तानि शरीराणि धर्मस्वरूपेण धर्मभूतज्ञानेन च बिभ्रति। तत्र स्वरूपसाध्यं धारणं शरीरसत्तायामुपयुज्यते । धर्मभूतज्ञानसाध्यं तु पुरुषार्थतदुपायस्थाने, कृतकृत्यानां भगवदनुभवकैङ्कर्ये, पापकृतां त्वेतद्विपरीतफले च इति विशेषः ।

एतेषामेव बद्धानां इतरेभ्यः स्थितौ विशेषः संसारबद्धस्य यावन्मोक्षमनुवृत्तिः । प्रवृत्तौ तु पुण्यपापानुभयरूपस्त्रिविधो व्यापारः ।

अथ मुक्तानां प्रतिबन्धकनिवृत्त्या आविर्भूतस्वरूपत्वमितरेभ्यः स्वरूपे विशेषः । स्थितौ पूर्वावधिमतोस्य आविर्भावस्य उत्तरावधिराहित्यम् । प्रवृत्तौ तु परिपूर्णभगवदनुभवजनितप्रीतिकारितयथाभिमतकैङ्कर्यप्राप्तिः ।

नित्यानामनाद्याविर्भूतस्वरूपत्वे सति परतन्त्रत्वमितरेभ्यः स्वरूपविशेषः । स्थितौ अनाद्यनुवृत्तभगवदनुभवः । प्रवृत्तौ अनादयः प्रवाहतो नित्याः कैङ्कर्यविशेषाः ।

एतेषामात्मनां धर्मभूतज्ञानमपि द्रव्यम् । तस्य च स्वरूपं विषयप्रकाशदशायां स्वाश्रयं प्रति स्वयंप्रकाशमानत्वम् । तदेतदीश्वरस्य नित्यानां च नित्यविभु । इतरेषां संसारावस्थायां

कर्मानुरूपबहुविधसङ्कोचविकासविशिष्टं मुक्तावस्थायां नैजविकासेन यावत्कालं विभु । स्थितिस्तु स्वरूओअतो नित्यत्वात् नित्या । प्रवृत्तिस्तु विषयप्रकाशकत्वं प्रयत्नावस्थया शरीरादिप्रेरकत्वं बद्धदशायां सङ्कोचविकासवत्त्वं आनुकूल्यप्रातिकूल्यप्रकाशनमुखेन भोगरूपावस्थायोगित्वं च ।
एतेषां सर्वेषामेव आत्मनां स्वरूपं स्वस्मै स्वयं प्रकाशते ।अस्य च प्रकाशस्य च कदापि कस्यापि सञ्कोचविकासौ न स्तः । धर्मभूतज्ञानं तु विषयप्रकाशवेलायामेव स्वाश्रयं प्रति स्वयं प्रकाशते । अनयोश्च धर्मधर्मिणोः ज्ञानत्वं स्वयं प्रकाशकत्वं साधारणम् । विषयत्वं प्रत्यक्त्वं च यथाक्रमम् असाधारणम्। तत्र ज्ञानत्वं कस्यचिद्वस्तुनः प्रकाशत्वम् । तच्च स्वस्य वा परस्य वा कस्यचिद्वस्तुनः व्यवहारप्रयोजकः सम्बन्धः । स च धर्मिणः तादात्म्यरूपः । धर्मस्य संयोगादिरूपः । स्वयंप्रकाशत्वं च स्वात्मानं विषयीकुर्वतो ज्ञानान्तरस्य अपेक्षामन्तरेण स्वव्यवहारप्रयोजकः सम्बन्धः । विषयत्वं स्वव्यतिरिक्तवस्तुप्रकाशत्वम् । प्रत्यक्त्वं स्वस्मै भासमानत्वम् । तच्च स्वप्रकाशप्रयोज्यव्यवहाररूपप्रयोजनभाक्त्वम् ।

एवं धर्मस्वरूपगतं प्रत्यक्त्वमपि स्वयंप्रकाशम् । यथा घटमहं जानामीति धर्मभूतज्ञानप्रकाशे कर्मतया भासमानात् घटात् विलक्षणया भासमानं ज्ञानत्वं स्वयं प्रकाशं तथा अहमितिधर्मिस्वरूपप्रकाशे धर्म्यंशे कर्मतया भानाभावात् प्रत्यक्त्वमपि स्वयं प्रकाशमित्यास्थेयम् । एवं धर्मधर्मिणोः स्वयं प्रकाशत्वेऽपि नित्यत्वादिधर्मपुरस्कारेण ज्ञानान्तरवेद्यत्वमस्ति । यदा स्वधर्मभूतज्ञानं स्वज्ञानान्तरेण अवभासते तदा प्रसरणभेदमात्रेण ज्ञानान्तरव्यपदेशः ।

अथ अचेतनं त्रिविधं प्रकृतिकालशुद्धसत्त्वभेदात् । त्रिविधमप्यचेतनं परेषामेव भासमानम् । तत्र अचेतनत्वं ज्ञानानाश्रयत्वम् । परेषामेव भासमानत्वं च स्वप्रकाशसाध्यव्यवहाररूपप्रयोजनशून्यत्वम् । एतल्लक्षणद्वयं धर्मभूतज्ञानस्यापि साधारणम् । एतेष्वचेतनेषु प्रकृतिकालौ जडौ । शुद्धसत्त्वमजडम् । अजडत्वं स्वयं प्रकाशत्वम् । तद्भिन्नत्वं जडत्वम् ।

शुद्धसत्त्वमपि जडमिति केचित् । अजडत्वे अस्मदादीनां शास्त्रमन्तरा कुतो न भासेतेति वदन्ति । तानेवं प्रतिब्रुवते भगवच्छास्त्राभिज्ञाः । यथा हि जीवात्मस्वरूपं स्वस्मै स्वयंप्रकाशं धर्मभूतज्ञानं च स्वाश्रयस्यैव स्वयंप्रकाशं नेतरेषां तथा शुद्धसत्त्वमपि नियतविषयं स्वयंप्रकाशम् । यथा वा धर्मभूतज्ञानस्य स्वयंप्रकाशनसामर्थ्यं विषयप्रकाशविरहदशायां कर्मविशेषेण प्रतिबद्धं मुक्तिदशायाम् अप्रतिबद्धं तथा अस्यापि स्वात्मप्रकाशसामर्थ्यं बद्धदशायां प्रतिबद्धं मुक्तिदशायामप्रतिबद्धम् । तस्मात् आत्मस्वरूपमिव ज्ञानादिशब्दव्यपदेश्यं शुद्धसत्त्वमपि स्वयंप्रकाशमिति प्रमाणप्रतिपन्नमत्र न युक्तयः प्रक्रमन्ते ।
इत्थमन्यस्वरूपप्रकाशत्वे रूपरसादिगुणवत्त्वं पृथिव्यादिविभागार्हत्वं परिणामशालित्वं च कथमिति चोद्यं धर्मभूतज्ञानस्य धर्मिस्वरूपस्य च विद्यमानं वैषम्यमिव प्रमाणबलेन परिहार्यम् ।

इत्थमेतेषां त्रिविधाचेतनानां स्वरूपं स्थितिश्च प्रत्यपादि। प्रवृत्तिस्तु ईश्वरसङ्कल्पानुरूपाः विचित्रपरिणामादयः । तेषु त्रिगुणद्रव्यस्य सततपरिणामशीलस्य सत्त्वरजस्तमांसि यदा समानि तदा प्रलयः, यदा तु विषमानि तदा सृष्टिः स्थितिश्च । गुणवैषम्यविशिष्टप्रदेशे महदादयो विकासाः, अत्र अविकृतं विकृतं च प्रकृतिप्रदेशमेकीकृत्य प्रकृतिः महान् अहङ्कारः पञ्चतन्मात्राणि पञ्चभूतानि एकादशेन्द्रियाणि च इति चतुर्विंशतितत्त्वविभागः । विवक्षाविशेषेण च क्वचित्तत्वसंख्याने न्यूनाधिकभावः ।

एतेषां तत्त्वानामभिमानिनो देवाः नित्यसूरयः सर्वेश्वरस्य पररूपमस्त्रभूषणादिरूपेण स्थिता इत्यतः तत्त्वानि अस्त्रभूषणादिरूपाणीति शास्त्रव्यवहारः ।

तानि च द्रव्याणि स्वरूपतो नित्यानि, नामान्तरभजनार्हावस्थाविशिष्टतया अनित्यानि । सजातीयावस्थासन्तत्यनुच्छेदवत्तया कानिचित् प्रवाहतो नित्यानि ।

एतेषां सर्वेषां स्वरूपस्थितिप्रवृत्तीनाम् ईश्वराधीनत्वं च ईश्वरसत्तायाम् ईश्वरेच्छायाम् चासत्यां तेषां सत्तादिशून्यत्वम् । तस्मादेषामानुकूल्यं स्वभावसिद्धमीश्वरसङ्कल्पायत्तम् । अतो मुक्तानामीश्वरस्य च सर्वं सदानुकूलमेव । बद्धानां पुनः तत्तत्कर्मानुगुणं पुरुषभेदेन कालभेदेन च प्रतिकूलमनुकूलं च । स्वात्मस्वरूपस्य तु यथास्वं सर्वदानुकूलत्वमेव ईश्वरसङ्कल्पनियतम् ।

अत एव देहात्मभ्रमवतामत्यन्तं हेयमपीदं शरीरं कर्मविशेषेण अनुकूलतया प्रतिभाति । मुमुक्षूणाम् औपाधिकेन प्रतिकूलरूपेण हेयं भवति । मुक्तानां पुनः शरीरं स्वाभाविकेन अनुकूलरूपेण उपादेयं च भवति । तस्मात् अहङ्कारममकारयुक्तस्य स्वार्थं स्वीक्रियमाणम् सर्वं प्रतिकूलम् । स्वस्वरूपज्ञानवतः स्वामिशेषत्वं च विजानतः सर्वमनुकूलमेव ।
एवं स्वाधीनसत्तादिमतः परमेश्वरस्य स्चरूपमपि सत्यत्वादिरूपस्वरूपनिरूपकधर्माधीननिरूपणतया सत्यं ज्ञानम् आनन्दम् अनन्तम् अमलम् इत्यादिपदाभिधेयं भवति । तस्यानन्तेषु गुणेषु ज्ञानबलैश्वर्यवीर्यशक्तितेजांसि परत्वोपयुक्तानि । सौशील्यवात्सल्यादीनि सौलभ्योपयुक्तानि । एते सर्वेपि गुणाः स्वरूपाश्रिता वेदितव्याः ।

तस्येश्वरस्य परं रूपमनन्तमेकमेव परव्यूहविभवार्चान्तर्यामिभेदात् पञ्चप्रकारमिव व्यपदिश्यते। तत्र व्यूहश्चतुर्विधः वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धादिभेदात् । पररूपस्य व्यूहान्तर्गतवासुदेवरूपस्य च विशेषविरहात् त्रिविधो व्यूह इति केचित् । एतेषु त्रिषु रूपेषु पूर्वोक्तानां ज्ञानादिगुणानां षण्णां द्विकत्रिकस्य उपासकानुग्रहाय आविष्कारः । केशवादीनि द्वादशरूपाण्यपि व्यूहान्तराणि ।

विभवास्तु पद्मनाभादयः षट्त्रिंशत् अष्टात्रिंशत् एकोनचत्वारिंशदितिसंहिताभेदेन प्रभेदवन्तः । हिरण्यगर्भरुद्धबुद्धादिक्षेत्रज्ञान् विग्रहविशेषेण शक्तिविशेषेण वाधिषायातिशयित कार्यकारिणो विद्याधिदेवादिप्रादुर्भावा अपि विभवभेदा एव ।

अर्चावतारास्तु आश्रितापेक्षानुगुणं विशिष्टप्रतिष्ठानन्तरं शिलादिप्राकृतबिम्बेषु परव्यूहाद्यप्राकृतविग्रहविशिष्टवेषेण क्षीरनीरन्यायेन अनुप्रविष्टाः । देशकालादिविप्रकर्षं विना मांसचक्षुषामपि अनुभवयोग्याः अर्चनप्रणामध्यानादिसौकर्यातिशयजननद्वारा मुक्तिप्रदा रूपविशेषाः ।

अन्तर्याम्यवतारास्तु सर्वव्यापिनः दिव्यात्मस्वरूपादतिरिक्ताः हार्दान्तर्यामिणः उपासकहृदयसन्निहिताः हृद्यागसमाराध्याः रूपविशेषाः । इदं च अवताररहस्यज्ञानम् एतस्मिन्नेव जन्मनि स्वाधिकारानुगुणं समीहितमुपायं पूरयित्वा जन्मान्तरानुभवमन्तरा मुक्त्युपकारकमिति स्थितमीश्वरस्य रूपम्।

स्थितिस्तु नित्यैव । प्रवृत्तिः पुनः सकलजगत्सृष्टिस्थितिसंहारमोक्षप्रदत्वान्तः प्रवेशनियमनादिकम् । सोयमीश्वरः सर्वास्वप्यवस्थासु लक्ष्मीविशिष्ट एवावतिष्ठते । तत्रेश्वरस्य दण्डधरत्वाधिकं श्रियः पुरुषकारत्वादिकं च वैषम्यमुभयेच्छाधीनव्यवस्थितविभागप्रयुक्तम् ।

तदेतत्तत्त्वजातं केचित् सर्वविशिष्टवेषेण एकधा अनुसन्दधते, अपरे ईशेशितव्यभेदेन आत्मानात्मभेदेन च द्वेधा अन्ये चिदचिदीश्वरभेदेन त्रेधा एवं रक्ष्यरक्षकहेयोपायभेदेन चतुर्धा प्राप्तृप्राप्यप्राप्त्युपायप्राप्तिप्राप्तिविरोधिभेदेन पञ्चधा, तत्र सम्बन्धमन्तर्भाव्य षोढा, प्रकृतिकालजीवेश्वरनित्यविभूतिधर्मभूतज्ञानाद्रव्यरूपेण सप्तधा अनुसन्दधते । तत्तादृशमनुसन्धानं तत्तत्प्रयोजनविशेषनिबन्धनमिति निरवद्यम् ।

## ६ परदेवतापारमार्थ्यम्

एवं सिद्धेपि सामान्यतः प्रकृतिपुरुषेश्वरविवेके परदेवताविशेषनिर्णयं विना प्रयोजनान्तरवैमुख्यसहितदेवतान्तरवैमुख्यरूपपरमैकान्तित्वासिद्धेः परमैकान्तिव्यतिरिक्तस्य व्यवधानं विना मोक्षासिद्धेश्च सोयमीश्वरस्तु एतादृशदेवताविशेष इति निष्कर्ष आवश्यकः ।

तत्र चेतनाचेतनयोः अत्यन्तभेदस्य प्रामाणिकत्त्वात् सर्वं जगत् परं ब्रह्मैव इति पक्षो न घटते । स्वाभाविकस्य जीवेश्वरभेदस्य देवादिरूपजीवानां परस्परं भेदस्य च सुखदुःखादिव्यवस्थया प्रामाणिकत्वात् ब्रह्मरुद्रादीनां सर्वेषां देवानां ईश्वरेण सह स्वेषां च परस्परभेद इति पक्षोऽपि दुर्घटः । एतेष्वपि देवेषु प्रधानभूतानां ब्रह्मरुद्रादीनां कार्यत्वकर्मवश्यत्वसिद्ध्या स्वेच्छावतीर्णस्य त्रिमूर्तिमध्यस्थस्य विष्णोरेव पूर्वावस्था विशिष्टवेषेण सर्वजगत्कारणत्वनित्यत्वादिसिद्ध्या च त्रिमूर्तित्रयं सममिति मूर्तित्रयमेकतत्वमिति त्रिमूर्त्युत्तीर्ण ईश्वर इति तेष्वेव ब्रह्मो वा रुद्रो वा ईश्वर इति साम्यैक्योत्तीर्णव्यक्त्यन्तरपरत्वपक्षा न संघटन्ते ।

एते च ब्रह्मरुद्रादयो देवाः सर्वेश्वरस्य नारायणस्य कार्यभूताः कर्मवश्याः मायापरतन्त्राः विभूतिभूताः शरीरभूताः ज्ञानसङ्कोचविकासवन्तः शुभाश्रयत्वविधुराः मुमुक्ष्वनुपास्या इति च सर्वसम्प्रतिपन्नप्रमाणप्रसिद्धम् । नारायण एक एव सर्वप्रकारेणापि समाभ्यधिकरहितः स्वव्यतिरिक्तसकलजन्तुसमुपास्य इति च ।

क्वचित् ब्रह्मरुद्रादीनां मोक्षोपकारकताकथनम् आचार्यादीनामिव ज्ञानहेतुतामात्रेण इति निर्णीतम् । सूर्यादिदेवतान्तरभक्तेष्वपि परावरतत्त्वेषु ऐक्यबुद्धिव्यत्ययबुद्धिसमत्त्वबुद्ध्यादिरहितः अनासुरस्वभावा एव पुरुषाः परम्परया भगवदनुग्राह्याः स्युः,अनीदृशा भगवन्निग्राह्या एव स्युः ।

अत एव मोहनशास्त्रोक्तकर्मसु क्षिप्रं दृष्टफलसिद्धिप्रदर्शनमपि भगवन्निग्रहप्रकारविशेषः। सत्यसङ्कल्पस्य भगवतो निग्रहविषयीभूतं पुरुषं न खलु ब्रह्मादयोऽपि रक्षितुमीशते । तथा अनुग्रहविषयीभूतं भगवान् सकलाभ्यो विपद्भ्यो रक्षति ।

देवतान्तरभजनेन विलम्ब्यापि मोक्षसिद्धिर्न सुलभा, भगवद्भजनेन तु निरतिशयैश्वर्यसिद्धिरपि दृष्टा, तदिदं भजनं तापनिवृत्त्यर्थं गङ्गास्नानमिव रजस्तमोनिबर्हणं सत्त्वोन्मेषणं च विदधत् मोक्षपर्यन्तमपि भवेत् । परन्तु अत्रास्ति विलम्बः । मोक्षरुच्यैव स्वशक्योपाये प्रवृत्तस्य तु नास्ति विलम्बोऽपि । स्वतन्त्रप्रपत्तिनिष्ठस्य तु स्वसङ्कल्पं विना विलम्बाविलम्बयोः नास्ति किमपि नियामकम् । तदेते नियमाः स्वतन्त्रेच्छासिद्धा इति प्रमाणपरतन्त्रसम्मतम् ।

अथ यद्यपि केनचिच्चार्वाकेण सेवकेनाराधिते राज्ञि शरीरान्तरवस्थितो जीवात्मा यथा परितुष्यति तथा निरूपितविवेकविधुरैरपि समर्पितेषु देवतान्तरेषु तेषामन्तरात्मा परमात्मा परितुष्यति । तथापि शास्त्रार्थवैकल्येन फलवैकल्यं प्रमाणप्रतिनियतम् । तत्र भगवदात्मकत्वज्ञानवतां क्षिप्रं फलकामनया देवतान्तरमुपासितवतां तत्तत्फलं सकलमेव । तत्र फलान्तरकामनयापि भगवन्तमेव आश्रितवतां

अतिशयताफलसिद्धिः । अनन्यप्रयोजनतया समाश्रितवतां तु आनुषङ्गिकशरीरारोग्यैश्वर्यादिसिद्धिः भगवत्सङ्कल्पनियता विद्याविशेषरागविशेषादिनियता च ।

सोऽयं परदेवताविशेषो महापुरुषः श्रीपतित्वलक्षणेन इतरेभ्यो व्यावृत्तः प्राप्यः प्रापकश्च । तमन्तरा प्राप्यान्तरं शरण्यान्तरं नास्तीति निगमः ।

## ७. मुमुक्षुत्वम्

ये पुनः इत्थमर्थान् अध्यात्मशास्त्रविशेषैरवधार्य स्वयंप्रकाशत्व-ज्ञातृत्व-भोक्तृत्व-शरीरित्व-अणुत्व-नित्यत्व-निरवयवत्वच्छेदन-दहन-क्लेदन-शोषणा द्यनर्हत्व-वृद्धि-ह्रास-रहितत्वादिरूपैः विशेषैः स्वविशेषणीभूतदेहेन्द्रियमनःप्राणधीभ्यो वैलक्षण्यं च विज्ञाय परलोकगमनदेहान्तरप्राप्त्यर्हत्वनिश्चयेन सामान्यतो लोकोत्तीर्णपुरुषार्थयोग्याः नरकपतनजन्मान्तरक्लेशेभ्योऽतिभीताः तद्धेतुभूतपापेभ्यो निवृत्ताः आधेयत्व-विधेयत्व-शेषत्व-अल्पशक्तित्व-अणुत्व-अज्ञान-संशय-विपर्यय-दुःखादियोग्यत्व-अशुभाश्रय त्वादिभिः परमेश्वरव्यावृत्तिनिश्चयेन स्वरूपप्राप्तभगवत्कैङ्कर्यरूपपरमपुरुषार्थयोग्याः अल्पत्व-अस्थिरत्व-दुःखमूलत्व-स्वाभाविकानन्दविरुद्धत्वरूपान् सप्तविषयानुभवदोषान् यथासम्भवम् आत्ममात्रानुभवदोषांश्च तत्प्रतिद्वन्द्विभूतान् भगवदनुभवगुणांश्च सर्वापेक्षितसङ्ग्रहरूपमन्त्ररत्नमुखेन अनुसन्धाय प्रवृत्तिधर्मात् निवर्तन्ते, निवृत्तिधर्मे च प्रवर्तन्ते त एव खल्वत्राधिकारिणः ।
पूर्वोक्तप्रकारैः परावरतत्त्ववेदिनोऽपि यदि वैराग्यपूर्वकं परमपुरुषार्थानुष्ठाने न प्रवर्तेरन् तर्हि शान्तिशीलवृत्तिरूपैः श्रुतफलैः विधुराः हास्याः स्युः । अथ च ये श्रुतानुरूपस्वोचितपरमपुरुषार्थोपायानुष्ठाने त्वरातिशयवन्तो भवन्ति ते स्वानुष्ठानेन अन्येषामपि तोषमावहन्तोऽतिशयितामेव समृद्धिं समवाप्नुयुरिति ।

## ८. अधिकारिविभागः

एवं परमपुरुषार्थोपायेषु निवृत्तिधर्मेषु प्रवृत्ता अधिकारिणो द्विविधाः अद्वारकप्रपत्तिनिष्ठाः सद्वारकप्रपत्तिन्ष्ठाश्चेति । तत्राद्याः मोक्षनिष्पत्तौ भक्तिमद्वारीकृत्य स्वतन्त्रतया प्रपत्तिमनुतिष्ठन्ते । अनन्तरास्तु मोक्षनिवृत्तौ भक्तिं द्वारीकृत्य तदङ्गतया प्रपत्तिमनुतिष्ठन्ते । उभयविधा अपि स्वतन्त्राङ्गप्रपत्तिभ्यां प्रपन्नाः फलसाधनभक्तिभ्यां च भक्ता अपि ।

तत्र उक्तिनिष्ठा आचार्यनिष्ठा इत्येते अधिकारिणोऽपि अद्वारकप्रपत्तिनिष्ठानां अवान्तरविशेषाः । तत्र उक्तिर्नाम आनुकूल्यसङ्कल्पाद्यङ्गेषु विशदतमावभासविहीनानां भगवद्व्यतिरिक्तगत्यन्तरशून्यत्वरूपाधिकारवतां सत्यामपेक्षायाम् रक्षिष्यतीतिमहाविश्वासशालिनां शरण्यविज्ञेयपूर्णप्रपत्तिगर्भसदाचार्योपदिष्टेन वाक्येन "मद्रक्षणं तवैव भरतया स्वीकरणीयम्" इति भगवति प्रार्थना । मुग्धसामन्तकुमारस्य सार्वभौमसमीपे धात्रीसमुपदिष्टवाक्येन "रक्षणान्तरशून्योऽहं भवन्तमेव शरणमुपगतः" इति प्रार्थनावत् ।

आचार्यनिष्ठानाम आचार्यस्यात्मात्मीयसमर्पणे शिष्याद्यात्मरक्षासमर्पणस्याप्यन्तर्भावः शिष्याद्यर्थमाचार्यस्य पृथगनुष्ठानं वा । एवं भागवताभिमानभगवद्विषयवासादीन्यपि उपासने प्रपदने वा प्रवर्तयन्ति । निष्पन्नोपासनानाम् उत्तरोत्तरमुपचयं जनयन्ति । स्वतन्त्रप्रपत्तिनिष्ठानां कैङ्कर्योपचयं जनयन्ति ।
इत्थं विशदज्ञानपूर्वकं समुदायज्ञानपूर्वकं वा अङ्गतया स्वतन्त्रतया वा स्वयं वा आचार्येण वा अनुष्ठितां प्रपत्तिं विना सर्वेश्वरः परमपुरुषार्थं न प्रयच्छतीति शास्त्रसिद्धम् ।

तत्र व्यासादीनामिव उपायान्तरसमर्थानां सद्वारकप्रपत्तिनिष्ठानाम् आकिञ्चन्यरहितानाम् विलम्बक्षमावताम् अनन्यगतिकतारहितानाम् अन्तिमप्रत्ययावधिकस्य उपासनस्य यथावन्निष्पत्त्यनन्तरभावी प्रारब्धकर्मपर्यवसानदशाभावी च मोक्षः फलम् ।

सर्वाधिकारां सर्वानिष्टनिवर्तनक्षमां सर्वेष्टसाधिकां सुकरां सकृत्कर्तव्याम् आशुकारिणीं प्रतिबन्धानर्हां ब्र्हमास्त्रन्यायेन सहकारिप्रयोगासहां च स्वतन्त्रां प्रपत्तिमनुष्ठितवतां तु फलं प्रति कस्यचिदपि प्रतिबन्धकस्य अभावात् एतद्देहासाध्यकैङ्कर्यानुभवाभिसन्धिकारणीभूतस्वानुमतिस्थापित शरीरावसानावधिकः परिपूर्णकैङ्कर्यप्राप्तिरूपो मोक्षः फलम् ।

सर्वेश्वरस्य सकलपुमर्थदानसमर्थस्य भगवतः पादारविन्दयोः प्रपत्तिः उपास्तिरिव चतुर्विधस्यापि फलस्य साधकत्वात् यथामनोरथं समयविशेषे मोक्षस्यापि साधकत्वाच्च ज्यायसीति सिद्धम् ।

एवं सद्वारकाद्वारकप्रपत्तिनिष्ठानां प्रभूतकैङ्कर्यापेक्षायां तुल्यायामपि ऐतद्देहिककैङ्कर्यवैषम्यम् इच्छावैषम्यप्रयुक्तम् । तद्वैषम्यमपि प्रारब्धसुकृतवैषम्यनिबन्धनम् । अन्तिमशरीरानन्तरभाविफलप्राप्तौ तु न किञ्चिदपि वैषम्यम् । ईश्वरनिरूपितं पारतन्त्र्यं अकर्मवश्यतारूपं स्वातन्त्र्यं च सममेव सर्वेषामिति ।

## ९. उपायविभागः

अथ इत्थमुभयविधयोरधिकारिणोः अनुष्ठेय उपायः ज्ञानविकासविशेषः । अनेन चोपायेन साध्यः प्राप्तिरूप उपेयोऽपि ज्ञानविकासविशेषः । तत्र प्रथमः करणसापेक्षः शास्त्रविहितः सत्यत्वादिरूपनिरूपकधर्मसहिततत्तद्विद्याविशेषप्रतिनियतगुणविशिष्टवेषेण परब्रह्मविषयकः ।

द्वितीयस्तु करणनिरपेक्षः स्वरूपप्राप्तः गुणविभूत्यादिभिः परिपूर्णब्रह्मविषयकः । तस्य चैतन्यानुभवस्य परीवाहरूपतया कैङ्कर्यविशेषोऽप्युपेयः ।

निरुक्तोपायोपेयभूतज्ञानविकासविशेषस्य विषयीभूतं परं ब्रह्मापि फलप्रदत्वभोग्यत्वरूपाभ्यां उपायः उपेयं च भवति । तत्राद्वारकप्रपत्तिनिष्ठविषये उपायान्तरव्यवधानापेक्षाविरहसहकृतफलप्रदत्वरूपेणौपायान्तरस्थाननिवेशेन विशिष्टत्वात् ईश्वरस्य उपायत्वम् । सद्वारकप्रपत्तिनिष्ठविषये तु कर्मयोगारम्भमारभ्य उपासनापूर्तिपर्यन्तं मध्येऽनुष्ठेयैः दुष्करैः उपायैः साध्यायाः पापनिवृत्तेः सत्त्वविवृद्धेश्च प्रपत्तिवशीकृतस्य भगवतः उपायान्तरस्थाननिवेशेन सञ्जननात् प्रकृतोपासनायाः संपूरणाच्च उपायत्वं ध्येयम् ।

तत्र कर्मयोगो नाम शास्त्रजन्यजीवपरमात्मयाथार्थ्यज्ञानपूर्वकं स्वशक्त्यैः फलसङ्गादिरहितकाम्यकर्मभिः नित्यनैमित्तिककर्मभिश्च अङ्गीभूतैः साकं यावत्फलोदयमनुष्ठेयतया अङ्गितया च परिगृहीतः देवार्चनतपस्तीर्थदानयज्ञाद्यन्यतमः कर्मविशेषः ।

अयमेव हि कर्मयोगः अधिकारिभेदेन ज्ञानयोगं द्वारीकृत्य अद्वारीकृत्य वा यमनियमादिपरिकरसहितेन आत्मसाक्षात्कारानुगुणचित्तसमाधानरूपेण योगाभ्यासेन आत्मसाक्षात्कारसाधनं भवति, यथा प्रपत्तिः भक्तिं द्वारीकृत्य अद्वारीकृत्य वा मोक्षसाधनं भवति ।

ज्ञानयोगो नाम कर्मयोगविजितान्तःकरणेन क्रियमाणं स्वस्वरूपस्य नित्यत्व-ज्ञानत्व-आनन्दत्व-अमलत्वाद्याकारेण निरन्तरं चिन्तनम् ।
अथैताभ्यां कर्मयोगज्ञानयोगाभ्यां योगद्वारा आत्मसाक्षात्कारे निष्पन्ने वैषयिकनिखिलसुखवैतृष्ण्यावहे स्वात्मानुभवे पर्यवसानम् अनासादयतां भक्तियोगप्रवेशदशायाम् सम्पुटितमहारत्नदर्शने सम्पुटदर्शनमिव अन्तर्यामिदर्शने शरीरभूतजीवात्मदर्शनमुपयुक्तं सत् भक्तियोगाधिकारकोटौ निविशते ।

भक्तियोगो नाम अनन्यनिष्ठस्य अनन्याधीनस्य अनन्यशेषस्य भगवतः स्वरूपरूपगुणविभूत्यादिविषयकः निरतिशयप्रीतिरूपो ध्यानविशेषः । स एव च तैलधारावत् निरन्तरस्मृतिरूपः आप्रयाणम् अहरहरभ्यासाधेयातिशयः अन्तिमप्रत्ययावधिकः ज्ञानविकासहेतुभूतसत्त्वविवृद्धिप्रतिबन्धरजस्तमोनिवर्तकवर्णाश्रमधर्मेतिकर्तव्यताकः साक्षात्कारसदृशवैशद्यविशिष्टः ।

सोयं मोक्षोपायतया विहितो भक्तियोगः परभक्तिरित्युच्यते । अस्य हेतुभूतः सात्त्विकपरिशीलनादिजन्यः भगवद्विषयकप्रीतिविशेषः शास्त्रजन्यभगवद्विषयकविशदज्ञानाभिनिवेशहेतुत्वात् भक्तिरित्युच्यते । सा च परभक्तिः साक्षात्काराभिनिवेशमुत्पाद्य तज्जन्यभगवत्प्रसादविशेषेण तत्कालनियतं साक्षात्कारमुत्पादयेत् । सोयं साक्षात्कारः परज्ञानमित्युच्यते ।

एवं निरतिशयभोग्यरूपभगवत्स्वरूपसाक्षात्कारानन्तरं सञ्जातः प्रीत्यतिशयः परमभक्तिः । सा हि परिपूर्णब्रह्मानुभवाभिनिवेशमुत्पाद्य अव्यवधानेन मोक्षं भगवन्तं प्रदापयति ।

अस्मिंश्च भक्तियोगे अत्रैवर्णिकानामनधिकारात् त्रैवर्णिकेष्वपि ज्ञानेन शक्त्या उभाभ्यां वा विहीनानां विलम्बासहतीव्रसंवेगशालिनां च अनधिकारात् अद्वारकप्रपत्तिरेव मोक्षोपायतया भक्तियोगस्थाने विधीयते । उपासकस्य परभक्त्यनन्तरभाविदशावत् स्वतन्त्रप्रपत्तिनिष्ठस्य स्वापेक्षानुगुणं प्रपत्त्यनन्तरभाविन्योऽनुकूलाः अवस्थाः सर्वा अपि प्रपत्तेः फलभूताः ।

एवं प्रपत्तेः भक्तेश्च अधिकारिभेदेन तुल्यफलत्वात् विकल्पः । सेयं प्रपत्तिः वाचिकी कायकी मानसिकी त्रैकरणिकी चेति चतुर्धा । सर्वापि यथाधिकारं फलप्रदा चेति ।

## **१०. प्रपत्तियोग्यः**

अथास्यां न्यासविद्यायामधिकारविशेषः परिकरविशेषोङ्गिस्वरूपविशेषश्चावगन्तव्यः । तत्र सामान्येन अधिकारो नाम? तत्तत्फलकामनासहितं तत्तदुपायसामर्थ्यम् । सामर्थ्यं च ज्ञानम्, यथाज्ञानमनुष्ठानार्हत्वम्, शास्त्रानुमतजातिगुणादियोगित्वं च । निरुक्ताधिकारविशिष्टस्य साध्यतयानूद्यमानं प्रयोजनं फलम् । एतादृशफलसाधनतया विधीयमान उपायः ।

अत्र स्वतन्त्रप्रपत्तिनिष्ठस्य भक्तियोगनिष्ठापेक्षया मुमुक्षुत्वशास्त्रजन्यसम्बन्धज्ञानादौ तौल्ये सत्यपि आकिञ्चन्यमनन्यगतिकत्वं च विशिष्टाधिकारः । तत्र आकिञ्चन्यमुपायान्तरसामर्थ्याभावः । अनन्यगतिकत्वं प्रयोजनान्तरवैमुख्यं, शरण्यान्तरवैमुख्यमपि । तीव्रतममुमुक्षाविरहात् देहानुवृत्त्यादिप्रयोजनान्तरसक्तस्य तु प्रपत्त्यनुष्ठाने सति प्रयोजनान्तरसङ्गानुगुणो मोक्षविलम्बो भवति ।

निरुक्ताकिञ्चन्यानन्यगतिकत्वयोर्निबन्धनमुपायान्तरेषु अज्ञानम् अशक्तिः फलविलम्बासहिष्णुता च । शरण्यान्तरवैमुख्यनिबन्धनम् भगवदेकपारतन्त्र्याध्यवसायः प्रयोजनान्तरवैमुख्यं च । एतादृशाधिकारसम्पत्तौ सत्त्यां प्रपत्तेर्जात्यादिनियमविरहात् सर्वाधिकारता सिद्धा भवति ।

## ११. परिकरविशेषः

आत्मनिक्षेपरूपायामस्यां विद्यायां आनुकूल्यसङ्कल्पः प्रातिकूल्यवर्जनम् कार्पण्यम् महाविस्श्वासः गोप्तृत्ववरणं चेति पञ्चपरिकराः । **आनुकूल्यसङ्कल्पो** नाम स्वाम्यभिमत करणानुकूलपारार्थ्यज्ञानजन्यः विहिते[त?] प्रवृत्त्या भगवदानुकूल्यं करिष्ये इति सङ्कल्पः ।

**प्रातिकूल्यवर्जनं** स्वाम्यभिमतकरणानुकूलपारार्थ्यज्ञानजन्यः निषिद्धनिवृत्त्या भगवत्प्रातिकूल्यं न करिष्ये इति सङ्कल्पः । अनयोश्च प्रयोजनमपायपरिहारः ।

**कार्पण्यम्** -उपायान्तरासामर्थ्य-प्रयोजनान्तरवैमुख्य- शरण्यान्तरवैमुख्यानुसन्धानम् । तच्च शरण्यकारुण्योत्तम्भनार्थम् उपायान्तरस्पर्शराहित्यार्थं चोपयुज्यते ।
**महाविश्वासः** - अनुकूलानस्मान् भगवान् रक्षिष्यतीति सुदृढोध्यवसायः । स च वक्ष्यमाणशङ्कापञ्चकमपनुद्य प्रपत्तेः अवश्यकर्तव्यतायां भरन्यसनानन्तरं लेशमात्रेऽपि स्वरक्षणव्यापारे स्वस्यानन्वितत्वरूपे निर्भरत्वे च प्रयोजकः ।
**गोप्तृत्ववरणं** तु स्वाभिप्रायनिवेदनं, तच्च भगवतः फलप्रदानेच्छोत्पादने समुपयुज्यते । एवमेतानि प्रपत्त्यनुष्ठानदशायामुपयुक्तत्वात् प्रपत्त्यविनाभूतस्वभावानि ।

**शङ्कापञ्चकं** तु - सार्वज्ञ्यसर्वशक्तियुक्तो भगवान् कथं कर्मयोगादीनामप्यनर्हतासम्पादकैरनन्तैरपराधैरपराध्यतो ममाभिगन्तव्यः स्यात् ॥१ ॥ तत्तत्कर्मानुगुणफलप्रदः कथं विधिशिवसनकादीनामपि दुर्लभमपरिच्छेद्यं फलं मह्यं प्रयच्छेत् ॥

२ ॥ सर्वोपकारनिरपेक्षः कायक्लेशार्थव्ययकालदैर्घ्यादिकं विनासकृदनुसन्धानरूपेण समुदायज्ञानपूर्वकसकृदुच्चारणरूपेण वा व्यापारेण कथं प्रसाद्येत् ॥ ३ ॥ क्षुद्रदेवतावत् क्षिप्रफलप्रदानस्वभावरहितः कथं विना विलम्बं दद्यात् ॥ ४ ॥ समाधिकदरिद्रः सर्वेश्वरः कथं वा तारतम्यमविचार्य जन्मवृत्तादिना अतिनीचाय मह्यमपरिमितं प्रयच्छेदिति ॥ ५ ॥

अस्य च शङ्कापञ्चकस्य यथाक्रमं निवर्तकानि **पुरुषकारसम्बन्धगुणव्यापारप्रयोजना**नि, तत्र **पुरुषकारो** नाम अभिमतदानसमर्थं पुरुषं प्रत्यभिगम्यतायै सहायतया स्वीकृतं चेतनान्तरम् । अस्य च विशेषः अप्रत्याख्येयत्वम् । एतादृशा अप्रत्याख्येयपुरुषकारविशेषेण सर्वज्ञोऽपि सर्वशक्तिरपि अन्तःपुरपरिजनानामिव अनन्तापराधक्षमापूर्वकम् अभिगम्यो भगवान् भवति ।

**सम्बन्धो** नाम स्वामित्वदासत्वभावः । अस्य च विशेषः सर्वप्रत्नेनापि अनिरसनीयत्वम् । अनेन अनिरसनीयेन सम्बन्धविशेषेण कर्मानुरूपफलप्रदोऽपि प्रपत्तिरूपव्याजेन प्रसन्नः स्वतः प्राप्तमपरिच्छेद्यं फलं प्रयच्छति ।

**गुणः** वात्सल्यसौशील्यादिः । तस्य विशेषः निरुपाधिकत्वम् । अनेन निरुपाधिकवात्सल्यादिना अवाप्तसर्वकामोऽपि सर्वोपकारनिरपेक्षोपि अनेन कृतं यं कञ्चिदुपकारं परमोपकारितया शिरसा प्रतिगृह्य कृतज्ञः सन् समुपकुरुते ।

**व्यापारः** सङ्कल्पः । अस्य विशेषः सहकार्यन्तरापेक्षाराहित्यम् । अनेन निरपेक्षसङ्कल्पेन यजनभजनादीनां विलम्ब्य फलप्रदोऽपि अनन्यशरणप्रपदनस्य अपेक्षितसमये फलप्रदो भवति ।

**प्रयोजनं** तु फलम् । तस्य विशेषः आश्रितप्रयोजनैकप्रयोजनत्वम् । समाधिकदरिद्रोऽपि निरङ्कुशस्वतन्त्रत्वात् आश्रितप्रयोजनैकप्रयोजनत्वात् अविचार्यैव तारतम्यं अपरिच्छेद्यमपि फलं प्रयच्छत्येव ।

एवं विशिष्टं पुरुषकारादिपञ्चकं सदाचार्यकटाक्षविक्षेपात् सम्यग्विदुषामेव एतादृशमहाविश्वासोदयः । तदेतत्सर्वमनुष्ठानवेलायां करणमन्त्रेऽनुसन्धेयम् ।

## १२. साङ्गं प्रपदनम्

अथ अस्मिन् शास्त्रार्थे यथावस्थितात्मनिक्षेपः अङ्गी- स च आत्मात्मीयरक्षणव्यापारे स्वाधीनतया आत्मात्मीयरक्षणफले स्वार्थतया च स्वस्यान्वयं विनैव रक्षाभरन्यासोद्देशकः सर्वरक्षकं सर्वशेषिणं सर्वेश्वरं प्रति अत्यन्तपारतन्त्र्यविशिष्टशेषत्वानुसन्धानलक्षणः ।

अस्य अनुसन्धानविशेषस्य विशिष्टाकारस्तु शेषिणः स्वतन्त्रस्य सर्वेश्वरस्य स्वप्रयोजनाय स्वयमेव संरक्षणौपयिकः अनन्यार्हानन्याधीनशेषभूतोऽहं न मम शेषत्वायार्हः यत्किञ्चिद्वस्तुपशुपुत्रादिकं निरुपाधिकतया मदीयमित्यप्यभिमन्तुमप्यनर्हम् आत्मानमात्मीयं च सर्वं भवत एव शेषभूतं, अस्य रक्षणभरः सर्वरक्षकाय भवत एव , रक्षणफलमपि प्रधानफलिने भवत एव इति भावना ।

इत्थमङ्गपञ्चकविशिष्टस्य अस्य अङ्गिनः विचारदशायां प्रत्येकमनुसन्धानसम्भवेऽपि विशिष्टवाक्यार्थप्रतिपत्तिदशायां साङ्गस्य प्रधानस्य एकबुद्ध्यारूढत्वात् सकृत्कर्तव्यत्वं सिद्ध्यति । एवम् अभ्यासपाटवशालिनो धानुष्कस्य लक्ष्यवेधार्थम् अनेकव्यापारसाध्यस्य बाणमोक्षस्येव क्षणकृत्यत्वं च सिद्ध्यति ।

साङ्गप्रधानानुष्ठानक्रमस्तु - कर्तृत्वत्याग-ममतात्याग-फलत्याग-फलोपायतात्यागपूर्वकम् आनुकूल्यसङ्कल्पाद्यर्थानुसन्धानेन सह गुरुपरम्परोपसत्तिपूर्वकं द्वयवचनमुखेन स्वरूपफलन्यासगर्भम् आत्मरक्षाभरसमर्पणमिति ।

अत्र आनुकूल्यसङ्कल्पस्येव प्रातिकूल्यवर्जनमहाविश्वासयोरपि सङ्कल्परूपत्वात् उपायपरिकरतया सकृत्त्वेऽपि अनन्तरमुपायफलतया यावदात्मभावित्वात् यावज्जीवं निरपराधकैङ्कर्यं प्रारब्धशरीरावसाने मोक्षं च फलतया समुच्चित्य प्रपत्तिकर्तारो निपुणा इति हृदयम् ।

इति श्रीमद्रहस्यत्रयसारसङ्ग्रहे प्रथमः परिच्छेदः

श्रीमते निगमान्तमहादेशिकाय नमः ।

# द्वितीयः परिच्छेदः

## १३. कृतकृत्याधिकारः

इत्थं प्रपत्तिरूपोपायविशेषनिष्ठः पुरुषः प्रपत्तेरनन्तरं फलं प्रति कर्तव्यांशविरहात् कर्तव्यांशस्य सकृदनुष्ठानेनैव सिद्धत्वात् स्वतन्त्रे सत्यसङ्कल्पे भगवति न्यस्तभरमात्मानमवधार्य निर्भरः,

विश्वसनीयं समर्थं सिद्धोपायत्वेन स्वीकृतं सर्वेश्वरं फलप्रदमनुसन्धाय निस्संशयः सवासनं परित्यक्तानन्यपुरुषार्थान् ससाधनं परित्यक्तानन्योपायान्, अकिञ्चनस्य अयत्नेन निधिसिद्धिवत् सम्पत्स्यमानां परमपुरुषार्थसिद्धिं चावलोक्य सन्तुष्टः स्वसजातीयाग्नीन्द्रादिदेवतान्तरपरिचरणकारणीभूतस्य ऋणस्य अपाकृतत्वात् नित्यनैमित्तिकेषु कर्मसु मन्त्रगतानामग्नीन्द्रादिशब्दानाम् अवयवशक्तिपौष्कल्येन नारायणपरतत्त्वमवधार्य शास्त्रवेद्याज्ञानुज्ञापरिपालनरूपकैङ्कर्यमुखेन प्रत्यक्षविदितपरमपुरुषाभिप्रायो मुक्त इव भगवतः किञ्चित्करः सन् उपायपूर्त्या कृतकृत्य इति पुरुषार्थपूर्त्या कृतार्थ इति च शास्त्रैः शास्त्रज्ञैश्च प्रशंसनीयो भवति ॥

एतादृक्षस्य मुमुक्षोः प्रपत्तेः प्रागुद्यतः शोकस्य अधिकारिकोटिप्रविष्टत्वात् तादृशशोकाभावे अधिकारापूर्त्या नोपायपूर्तिः । प्रपत्तेश्चानन्तरम् अनुष्ठितोपायम् आत्मानमवधार्यापि विश्वासमान्द्यादिना शोकश्चेदप्युपायपूर्तिः । ततो न कृतकृत्यता । तस्माद्वीतशोक एव कृतकृत्य इति विनिश्चयः ।

## १४. स्वनिष्ठाभिज्ञानाधिकारः

एवमेतादृशनैर्भर्यप्रयोजकतया कृतकृत्यतामवधारयितुं स्वरूपोपायपुरुषार्थविषयकनिश्चयलक्षणायाः स्वनिष्ठाया अभिज्ञानमावश्यकम् । तत्र स्वरूपनिष्ठायामभिज्ञापकानि लिङ्गानीमानि -: परकृतपरिभववेलायां परिभावकोदाहृतदोषाणां देहानुबन्धित्वज्ञानेन स्वरूपाननुबन्धित्वज्ञानेन च विषादराहित्यं, तेषु च परिभावकेषु वृथा पतिष्यन्तीति अपारकारुण्यं स्वगतदोषस्मारकतया उपकारस्मरणं स्वस्वकर्मानुगुणफलप्रदानलक्षणदयारसवता भगवता प्रेर्यमाणाः परिभवन्तीति तेषु निर्विकारचित्तत्वं प्रारब्धं च कर्म समूलं विनश्यतीत्यतिसन्तोषश्च ।

तदेतेषु चिह्नेषु परिदृश्यमानेषु अचिद्विलक्षणे सर्वभूतानुकूल्याद्यर्हज्ञानशालिनि सर्वतोमुखाकिञ्चन्यवति स्वतः सर्वसमस्य कर्मानुगुणफलप्रदस्य स्वतन्त्रस्य शेषिणः शेषभूते परतन्त्रे परायत्तहिते स्वस्वरूपे निष्ठास्तीति विजानीयात् ॥

अथ उपायनिष्ठायामभिज्ञापकानि चिह्नानि-: भगवद्व्यतिरिक्ते स्वस्मिन् परस्मिन् वा स्वरक्षणसामर्थ्यराहित्यबुद्धिः, मरणपर्यन्तेषु भयहेतुषु सत्स्वपि अभिमतासक्तिविशेषेण प्रीतिः,रक्षकावष्टम्भेन महती धृतिः, भरन्यासविषये स्वयत्ननिवृत्तिः, अनिष्टनिवृत्तीष्टप्राप्तिषु तादधीन्यमतिश्च सत्सु चैतेषु चिह्नेषूपायेप्यस्ति निष्ठेति विजानीयात् ॥

अथ पुरुषार्थनिष्ठायाम् इमान्यभिज्ञानलिङ्गानि -: प्रारब्धकर्मविशेषानुरूपभगवत्सङ्कल्पायत्तत्वबुद्ध्या, देहयात्रायां नैश्चिन्त्यं शास्त्राविरुद्धस्य अप्रयत्नागतस्य विषयस्य, प्रारब्धकर्मफलरूपऋणापकरणबुद्ध्या स्वीकरणं, प्राप्तयोरपि सुखदुःखयोः हर्षशोकपरित्यागः, स्वरूपानुरूपपरमप्राप्यकैङ्कर्याभिरुचिः तादृशकैङ्कर्यप्राप्तौ त्वरा चेति । सत्स्वेतेषु चिह्नेषु अपरिच्छेद्यपरमपुरुषार्थेऽपि अस्ति निष्ठेति जानीयात् ॥

एवं स्वस्मिन् निष्ठात्रयसम्पत्तिं विजानतोऽस्याधिकारिणः ब्रह्मविदपचारव्यतिरिक्तेषु भीतिहेतुषु स्वरूपप्राप्तकैङ्कर्यव्यतिरिक्तेषु प्रीतिहेतुषु न प्रसरेयुः कटाक्षाः । यदृच्छया सत्यामपि प्रसृतौ भीतिः प्रीतिर्वा नैवोत्पद्येत ॥

## १५. उत्तरकृत्याधिकारः

एवं कृतकृत्याः स्वनिष्ठाभिज्ञानवन्तः अधिकारिणः स्वादुतमत्वात् स्वयं प्रयोजनं शास्त्रविभक्तकालविशेषनियतं शृङ्खलावदन्योन्यमनुबद्धं स्वामिसन्तोषस्य कारणं कार्यं च स्वरूपानुरूपकालक्षेपार्थमुत्तरकृत्यमनुतिष्ठेयुः ॥

तन्निष्ठानुगुणं च ज्ञातव्यांशेषु अज्ञातमंशं निष्कृष्य कृतकृत्या इत्यनादृत्य ज्ञानभक्त्याद्यपेक्षायां बाधकाभावात् परमशेषिणि चित्तरञ्जनार्थं विशेषज्ञसकाशात् विज्ञाय स्वस्ववर्णाश्रमजातिगुणाद्यनुगुणं कर्तव्यांशं निष्कृष्य अनुष्ठाय च एतदनुष्ठानभावनया स्वोत्कर्षं परनिकर्षं च कदापि नानुसन्दधीरन् ॥

अथ कदाचित् शरण्यप्रसादविशेषमूलेषु फलोद्गमपर्वसु प्राप्तेष्वपि स्वाधिकारप्रविष्टमाकिञ्चन्यमनिवार्यं कार्पण्यं च पुरस्कृत्य अनादेः कालात्प्रवृत्तामनर्हतां महतीं च कैङ्कर्यविनष्टिमनुचिन्त्यानवाप्यावसादं पथ्यतमेन हिततमेन च शरण्योपदेशविशेषेण अवताररहस्यादिरूपं तीर्थमवगाह्य आश्वास्यात्मानं अपर्यनुयोज्यानवधिकशरण्यप्रभावेन इदानीं प्राप्तां योग्यतां तदनुगुणाम् आज्ञानुज्ञानुवर्तनरूपकैङ्कर्यानुभूतिं च अवलम्ब्य सात्त्विकाहारसेवनादिना कायकरणादिशुद्धिं सम्पाद्य अयोग्येषु विषयान्तरेषु प्रसरन्तीमनादिवासनां प्रत्यावर्तयेयुः ॥

तत्राप्यभिमतदेशान्तरगमनाय नदीं तितीर्षवः परतीरगतां नावं प्रतीक्षमाणाः तदन्तरान्वेच्छया सुपरिहारे विहारद्यूते प्रवर्तमानाः दुष्परिहरे पणबन्धे अननुप्रविष्टा अपि द्यूतशास्त्रनियममनुसृत्यैव यथा दीव्यन्ति राजकुमाराः, यथा वा अयत्नसिद्धौषधविशेषपरिहृतपित्ताः भाग्यशालिनः केवलं भोगायैव क्षीरं सेवन्ते । तथा सर्वप्रशासितुः भगवतः आज्ञानुज्ञानुरूपशासनानुगुणं कालविशेषादिनियतं कैङ्कर्यं केवलं भोग्यबुद्ध्यैव अनुतिष्ठेयुः ॥

एवं देवर्षिसिद्धमनुष्यादिरूपतत्तदधिकारिविशेषच्छन्दानुरोधेन, परमैकान्तिनः स्वस्य च छन्दानुरोधेन समवतीर्णे अर्चावतारे, भगवति सर्वातिशायिषाड्गुण्यसंपूर्तिं निरतिशयं पावनतमत्वं प्रत्यक्षादिप्रमाणत्रितये हेतुफलभावेन सम्भावितानां कुवासना-कुबुद्धि-कुतर्क-कुहित-कुभाव-नास्तिकत्वादिरूपदोषाणां सद्योविनिवर्तकत्वं वाङ्मनसापरिच्छेद्य आश्रितपारतन्त्र्यं मनोहरत्वं चानुसन्धाय तत्तत्सम्बन्धवर्गपरत्वसौलभ्याद्यनुगुणां वृत्तिं अङ्गीकुर्वीरन् ।

इत्थं भगवदुपक्रमायाः भागवतपर्यन्तायाः कैङ्कर्याख्यपुरुषार्थसिद्धेः प्रधानकारणं सदाचार्यकटाक्ष एवेत्यवधार्य श्वोऽभिषेक्ष्यमाणराजकुमारस्य सन्निधौ रात्रावारोपितं प्रदीपमिव तत्कटाक्षलब्धं तत्त्वज्ञानं तन्मूलकं कैंकर्यं च अनुसन्धाय, एवमाचार्यसम्बन्धोपक्रमस्य मुक्तिपर्यन्तस्य अर्थस्य मुक्तावपि यावदात्मभाविनो भगवदनुभवस्यापि प्रधानकारणमपर्यनुयोज्य स्वातन्त्र्यमूलं सर्वसंशयविनिवर्तकं सत्यसङ्कल्पस्य श्रीपतेः सहजं कारुण्यमिति चानुसन्धाय कृतज्ञा आसीरन् ॥

अथैनमुत्तरकृत्ये मनोवाक्कायरूपकरणत्रितयेन त्याज्येषु उपादेयेषु च सारतमार्थान्स्तु परमपुरुषार्थरुच्यसङ्कोचाय विस्मर्तव्येषु प्रधानो विषयास्वादः । कृतघ्नताविनिवृत्तये स्मर्तव्येषु प्रधानः आचार्यकृतः प्रथमकटाक्षप्रभृतिरुपकारः । कार्पण्याविलोपाय अवक्तव्येषु प्रधानः स्वात्मोत्कर्षः । उपायनिष्ठाऽविस्मरणाय वक्तव्येषु प्रधानः द्वयमन्त्रः । स्वामिनो भगवतो प्रीत्यनुदयाया कर्तव्येषु प्रधानः भगवत्कैङ्कर्योत्तरावधिभूतः शास्त्रानुमतः आचार्यादिभागवतकैङ्कर्यविशेषः ॥

## १६. पुरुषार्थकाष्ठा

भगवत्कैङ्कर्यं हि अस्य पुरुषार्थः । स चेत् भागवतकैङ्कर्यपर्यन्तः स्यात् सैव हि पुरुषार्थकाष्ठा । तत्प्रकारस्त्वित्थम्-ः सर्वेश्वरं प्रति शेषभूतोऽसौ चेतनः शेषिविषये कञ्चनातिशयमादधीत । स चातिशयः वस्तुशक्त्यनुरोधेन प्रवर्तते । शरीरत्वादि मुखेन क्रियमाणस्य अतिशयस्य अचेतनसाधारण्यात् विशिष्य चैतन्यमुखेनातिशये कर्तव्ये सति तत्र शास्त्रविरुद्धप्रवृत्तौ सत्यां शासितुः दण्डधरस्येश्वरस्य लीलारसोत्पादनद्वारा अतिशयमाधत्ते । शास्त्राविरुद्धप्रवृत्तौ सत्याम् ईश्वरस्य सन्तोषमुत्पाद्य तदीयौदार्यादिगुणप्रकाशनद्वारा अतिशयमाधत्ते ।

एवं मुक्ता नित्याश्च ईश्वराभिप्रायसाक्षात्कारपुरस्सरं क्रियमाणेन कैङ्कर्येण भोगविशेषोत्पादनमुखेन यथातिशयाधायकाः, तथा असावपि कृतकृत्यः शास्त्रमुखेन ईश्वराभिप्रायं विदित्वा अतिशयाधायको भवति । तत्र शास्त्रविरुद्धाचरणेन लीलारसोत्पादनं स्वस्य अनर्थपर्यवसायि भवति । बद्धदशायां शास्त्रेण मुक्तिदशायां प्रत्यक्षेण भगवदभिप्रायानुगुणाचरणेन भगवतो लीलाभोगरूपपुरुषार्थजननम् आनुषङ्गिकस्वाभिमतपुरुषार्थपर्यवसायि भवति ।

तत्र च ईश्वराभिप्रायविमर्शे राज्ञो राजकुमारोपलालनवत् भगवतो भागवतकैङ्कर्यमत्यन्तमभिमतत्वात् प्रधानं सत् भगवन्तं स्वान्तर्यामिकैङ्कर्यमिव च प्रीणयति । एवं न केवलम् अभिमतत्वादेव । अपि तु शेषत्वस्य सद्वारकत्वादपि कैङ्कर्यं सद्वारकं स्यात् भागवतसहितस्यापि भगवतः शेषित्वात् । किञ्च- यथा स्वच्छन्दलीलः स्वतन्त्रो राजा स्वोपभुक्तं माल्याभरणादिकं गजतुरगादिकण्ठे अर्पयति तथा अत्यन्तपरतन्त्रमेनं भगवान् यथेष्टं विनियोक्तुमर्हति । ततश्च भगवच्छेषत्वं भागवतशेषत्वपर्यन्तं स्यात् । तस्मात् यथाशक्ति भगवत्कैङ्कर्याकारविवृद्धिरूपं भागवतकैङ्कर्यमनुष्ठेयम् ॥

तत्र भागवतानां परस्परेण कृतमतिशयमनुपजीव्य परस्परस्य अतिशयमादधताम् अतिशयाधायकत्ववेषेण शेषत्वं अतिशयाश्रयत्ववेषेण शेषित्वं च परस्परोपकार्योपकारकवत् सम्भवतीति न विरुध्यते । तत्रेश्वरः स्वतन्त्रेच्छया सर्वेषां भागवतानां शेषित्वं

तत्तद्भागवतेच्छासहकृतेच्छया शेषत्वं चोत्पादयति । ततश्च परस्परं भागवतानां स्वरूपसत्तालाभः पुरुषार्थकाष्ठालाभश्च सम्पन्नो भवति । ईश्वरस्य त्वीश्वरत्वलाभः भोक्तृत्व लाभश्च सिद्धो भवति ॥

एवं निश्चितार्थैः सारविद्भिः कृतकृत्यैः अपराधरुच्यतिशङ्का देवतान्तरस्पर्श-स्वाधीनभोग-स्वार्थभोगप्रभृतिदोषविधुराणां परमैकान्तिनामेव प्रसादः सर्वदा स्वयं प्रयोजनतया अपेक्षणीय इत्यनवद्यम् ॥

## १७. शास्त्रीयनियमनम्

अथेत्थं शेषत्वसम्बन्धमूलस्य भगवद्भागवतकैङ्कर्यस्य अनुष्ठानं शास्त्रसापेक्षानुरागात् आहोस्वित् तन्निरपेक्षानुरागाद्वा इति मीमांसायां प्रकृतिमण्डलान्तर्गतस्य अस्याधिकारिणः प्रदीपवत् शास्त्रमेव अपेक्षितमतो न यथारुचि कर्तुं युक्तम् । किंतु शास्त्रोक्तनियमानुसारेणैव युक्तमनुष्ठातुम् । शास्त्रेणैव विकल्पिते विषये यथारुचीति ज्ञेयम् ॥

इत्थं शास्त्रोक्तनियमानुवर्तनम् अपूर्णोपायानाम् अधिकारिणाम् उपायपूर्तिप्रतिरोधिदुरितशमनमुखेन भगवत्प्रसादं जनयति । पूर्णोपायानां तु अतिलङ्घनहेतुका प्रीत्यनुदयमुखेन**[?]** भगवत्प्रीतिं वर्धयति ॥

तत्र शास्त्रविहितो धर्मः आज्ञानुज्ञाभेदेन द्विविधः । तत्र आज्ञासिद्धधर्मानुष्ठानं अननुष्ठाननिबन्धनं प्रत्यवायं प्रतिरुणद्धि । अनुज्ञासिद्धधर्मानुष्ठानं तादृशप्रत्यवाया<u>नावह</u>**[**नामावह**?]**मपि भगवत्प्रीत्यर्थमेव उपादित्सितं सत् क्रमस्य आज्ञासिद्धत्वात् अज्ञातक्रमदोषपरिहाराय सक्रममेवोपादेयमिति सिद्धम् ॥

## १८. अपराधपरिहारः

एवं भगवच्छेषतैकस्वभावस्य शास्त्रनियततत्कैङ्कर्यैकरसिकस्य अधिकारिणः अनापदि बुद्धिपूर्वकापराधः स्वीकृतकैङ्कर्यैकनिष्ठाविरुद्धत्वात् प्रायशो न सम्भवति । प्रारब्धकर्मविशेषवशात् देशकालावस्थादिवशात् प्रमादवशात् सुषुप्त्याद्यवस्थावशाच्च सम्भवन्नपि अश्लेषविषयतया विनश्यति ॥

अथ मोक्षार्थप्रपत्त्यनुष्ठानवेलायां बुद्धिपूर्वकपापारभकपापानामपि निवृत्तिमनन्तर्भावयतां सर्पेणेव शरीरेण सह निवसताम् आत्मगुणपूर्तिविरहात् मन्दधैर्याणामिव ऋषीणां बुद्धिपूर्वकेपि क्वचिद्विपरीतानुष्ठाने सति निसर्गसुहृत्-रक्षणोन्मुखः श्रियःपतिः लज्जानुतापादिभिः यथाधिकारं प्रायश्चित्तमासादयति ॥

एवं प्रारब्धकर्मविशेषवशात् कठिनप्रकृतीनां यथाधिकारं प्रायश्चित्तमकृतवतां काणत्वखञ्जत्वादिलक्षणोपक्लेशरूपपापनिवर्तकोपायान् पुरस्कृत्य क्षमाप्रेमदयावात्सल्यादिना मन्दीभूतप्रतापः भगवान् लघुना दण्डेन संरक्षति । एवंकरणमपि पूर्वप्रपत्तिफलीभूतक्षमाप्रकारभेद इति भगवति कृतज्ञतामेव परिपोषयेत् ॥

तस्मात्संभवत्यपि बुद्धिपूर्वकाघे तत्प्रायश्चित्ताकरणेपि दण्डविशेषो नास्ति, विलम्बासहिष्णूनां परमफलस्य नास्ति विलम्बः । प्रारब्धसुकृतविशेषाधीनैहिककैङ्कर्यविच्छेदो नास्तीत्यादिपक्षाः शरण्यगुणानां शरणागतिप्रभावस्य च वैभववादाः । अन्यथा प्रपन्नपूर्वाचार्यानुष्ठानस्य शास्त्रस्य च विरोधो दुष्परिहरः । किञ्च उपासकस्यापि बुद्धिपूर्वोत्तराघेविद्यामाहात्म्यात् न स्यात् प्रत्यवायः । तस्मात् प्रपन्नस्य राजपुत्रापराधवत् लघुर्दण्डः । तादृशस्यापि दण्डस्य परिहाराय पुनः प्रपदनादिकं विधीयते । शिष्टतया व्यपदेश्यानां तु लोकसम्प्रदायप्रसिद्धनिमित्तेषु यथाशक्ति प्रसिद्धमेव प्रायश्चित्तं कर्तुमुचितम् ॥

तत्र एवं सति यद्ययमागामिबुद्धिपूर्वपापात् बिभेति तदा तत्कारणीभूतप्रारब्धपापांशस्यापि निवृत्तिमुद्दिश्य मोक्षार्थं प्रपदनमनुष्ठेयम् । अनन्तरं वा पृथगेतदर्थमनुष्ठेयम् । अत एव सर्वेश्वर इव नित्यसूरयोऽपि अवतारदशायां कर्मवश्यत्वमभिनीय लोकहिताय अपराधपरिहारादिकमन्वतिष्ठन् ॥

तत्रापि भागवतापचारः राजदारापराधवत् भूयो भगवन्निग्रहसङ्कल्पावहः । तस्मात् स्वस्य पराशरव्यासादीनां च भागवतत्वपरमपुरुषार्थयोग्यत्वादिना साम्येपि तुलसीचम्पकानामिव गोमयमृगमदादीनामिव च भगवत्सङ्कल्पविशेषप्रयुक्ततत्तदुपाधिस्वभाववशात् सिद्धौ उत्कर्षापकर्षौ असूयाप्रादुर्भावप्रकरणाम्नाननयेन न तिरस्कारार्हौ ॥

जातिगुणवृत्ताद्युपाधिवशात् भागवतविशेषविषये शुश्रूषादिप्रवृत्तिविशेषस्य यथाशास्त्रं नियमे सत्यपि शेषित्वप्रतिपत्तिः अन्यूना एव कर्तव्या । तावतापि शेषत्वोचितकिञ्चित्काररूपकैङ्कर्यस्य सिद्धिः । एतादृशभागवतविषये क्वचित्सम्भवत्यपि स्खलने तदैव तस्य क्षमा प्रार्थनीया । अन्यथा स्वरूपोच्छित्तिरेव स्यादिति निष्कर्षः ।

## १९. स्थानविशेषः

अथ यावज्जीवमेवं स्वयंप्रयोजनतया निरपराधानुकूलवृत्तिमतः त्वरावतश्च परमैकान्तिनः अनुकूलमनुगुणं आवासस्थानं विमर्शनीयम् । तत्र आर्यावर्तादिपुण्यदेशानां युगस्वभावेन इदानीं व्याकुलतया प्रतिष्ठितचातुर्वर्ण्यधर्म एव प्रदेशः समुपादेयः ॥

तत्रापि भागवतोत्तरः ताम्रपर्णीकावेरीकृतमालापयस्विन्यादिपुण्यतीर्थोत्तरः भगवद्भागवताभिमानविषयीभूतः श्रीरङ्गहस्तिगिरिवेङ्कटगिरियदुगिर्यादिः सत्त्वोत्तरो वा क्षेत्रविशेषः मुमुक्षुभिः परिग्राह्यः ।

## २०. निर्याणम्

अथ भगवच्छरणावेव शरणं प्रपन्नाः भगवता दत्तं हस्तमवलम्बमानाः तेनैव स्वाभिमते देशविशेषे पर्यवस्थापिताः समभिषिक्तसार्वभौममहिषीवत् पारमैकान्त्यानुगुणां वृत्तिमातिष्ठेरन् ॥

एवं स्थितेष्वधिकारिषु प्रारब्धदुष्कृतविशेषवैचित्र्याधीनोहङ्कारः ममकारः तदधीनापचारः प्रयोजनान्तराभिलाषः तत्प्रयुक्तो देवतान्तरस्पर्शः बुद्धिदौर्बल्यम् उपायान्तरप्रत्याशा चेत्येवमादि वैपरीत्यवतां प्रारब्धसुकृतविशेषेण पूर्वप्रपत्तिसङ्कल्पविशेषेण च अच्छिद्रे कैङ्कर्ये प्रतिष्ठितवतां च अस्मात् संसारात् निर्याणे विलम्बोऽविलम्बश्च सम्भवतः ॥

तत्र पूर्वेषां प्रपन्नानां चार्वाकादीनामिव अहङ्कारममकारौ न प्रसरतः । गच्छतः स्खलनमिव कदाचित्प्रसरन्तावपि उदीच्य विवेकेन विलीयेताम् । तथा सम्भूताश्चापराधाः प्रायश्चित्तावधिकाः शिक्षावधिकाः अनुभवावधिका वा सङ्कल्पितसमयादर्वाक् निरस्ता भवेयुः ॥

इत्थं प्रयोजनान्तररुचिरपि मुमुक्षुत्वात् न प्रतितिष्ठेत् । उभयभावनावतामिव केषाञ्चित् सम्भवन्त्यामपि तस्यां हिततमः परमेश्वरः कानिचित् प्रयोजनान्तराणि दर्शयित्वा तेषु अल्पास्थिरत्वादिविवेकोत्पादनमुखेन अरुचिमुत्पाद्य सौभरिकुचेलादीनामिव केषाञ्चित् भोगेन वा निर्वेदमुत्पाद्य सङ्कल्पितसमयानां तत्समयात्पूर्वमेव प्रयोजनान्तरवैमुख्यं जनयति । सङ्कल्पितसमयरहितानां वैराग्यावधिकं तत् स्यात् ॥

देवतान्तरस्पर्शस्तु याद्दच्छिकेन परमैकान्तिसंसर्गेण लज्जावधिकः सन्निवर्तेत । कस्यचित् सोऽपि प्रतिष्ठितश्चेत् पूर्वमुपायो नैव निष्पन्नः । सम्भवेदपि पश्चान्नरकादिः । अनुष्ठितांशस्तु अभिक्रमनाशविरहात् यदाकदाचिन्निष्पादयेदेव उपायमिति ॥

सम्पूर्णेन महाविश्वासेनानुष्ठितोपायानां बुद्धिदौर्बल्यम् उपायान्तरप्रत्याशा च नैवोद्भवतः । यद्युद्भवतः मन्दस्तर्हि पूर्वः विश्वासः । तानपि सम्पूर्णमहाविश्वासान् सम्पूर्णोपायांश्च कारयत्येव

भगवान् । एतादृशाहङ्कारममकारादिवैपरीत्यविधुराणामितरेषां विलम्बादिशङ्कापि नास्ति । किन्तु इच्छावधिको विलम्बः। सङ्कल्पितसमयाविनाभूतश्च मोक्षः ॥

अथ निरुपाधिकसर्वशेषी निरुपाधिकस्वतन्त्रः सत्यसङ्कल्पः सर्वेश्वरोऽस्याधिकारिणः समस्तभयनिदानं निग्रहसङ्कल्पं सद्वारकप्रपत्तिनिष्ठानामुपासनप्रारम्भदशायामिव प्रपत्तिवाक्योच्चारणप्रथमक्षण एव परित्यज्य एतमेतदीयांश्च नित्यसूरिपरिषद्यन्तर्भाव्य एतदीयानपराधान् निरन्वयं विनाश्य अनुबन्धिनामपि सर्वानपराधान् अनुत्थापादिना परिहरयितुमनुगृहणाति ॥

अथास्यापेक्षितमोक्षविलम्बे स्वयं सानुतापस्त्वरमाणश्च सन् अस्य स्वानुबुभूषामुत्पाद्य संवर्ध्य प्रारब्धशरीरावसाने परपदं प्रापयिषुः शरीरपातसमयेऽस्य अनुकूलप्रतिकूलवर्गयोः सुकृतदुष्कृते संविभज्य मनुष्यपितृदेवानामहनि रात्रौ वा स्वसङ्कल्पितसमयेऽप्रच्युतपूर्वसंस्कारमनोरथं विधाय प्रशस्ताप्रशस्तनियमरहितं तत्कालोपस्थितं यत्किञ्चिच्छरीरविश्लेषनिमित्तमुत्पादयति ॥

अथ वागादिकं बाह्येन्द्रियदशकं मनस्येकीकृत्य तादृशं मनः प्राणवायुना संयोज्य तादृशं च वायुं जीवे संयुनक्ति । तं च जीवं त्रिस्थूणक्षोभदशायां स्थूलदेहान्निर्मथ्य समुद्धृतैः पञ्चभिः सूक्ष्मभूतैः संयोज्य अतिविह्वलमेनं निसर्गसौहार्दो हार्दः उपलालयति । इत्थं विद्वदविद्वत्साधारणोऽयं स्थूलशरीरादुत्क्रान्तिक्रमः ।

अथ चोराणामिवात्मापहारिणां स्वर्गनरकादिगमनसाधनभूतानि मार्गान्तराणि पिधाय अर्चिरादिमार्गस्य मुखभूतायां शताधिकायां ब्रह्मनाड्यां प्रवेश्य सूर्यकिरणावलम्बिनमेनमतिवाहयति ॥

अत्र नष्टस्मृतिरपीत्यादिप्रमाणबलात् प्रपन्नस्य अन्तिमस्मृत्यादिषु नैव निर्बन्ध इति प्रतीयते । प्रतीयते च शरीरपातसमये केवलं मदीययैव दययाऽतिप्रबुद्ध इत्यादिना अन्तिमस्मृतिसम्भवश्च । अनयोरविरोधाय इत्थं केचिदाचार्या समादधिरे । अन्तिमस्मृतिसम्भवकथनं स्मृतिमपि प्रपत्तिफलत्वेन क्रोडीकृत्य भरन्यासकर्तॄन् विषयीकुरुते । असम्भवकथनं तु केवलभरन्यासकर्तॄनिति ॥

तत्रासम्भवपक्षे प्राणिमात्रसाधारणाया अन्तिमायाः स्मृतेः निर्विषयत्वासम्भवात् भगवद्व्यतिरिक्तविषयकत्वे तद्भावप्राप्त्यानर्थपर्यवसानात् केवलभगवत्सङ्कल्पायत्तान्तिमस्मृतिसम्भवपक्ष एव श्रेयस्तया स्वीकर्तव्यः । प्रमाणमपि इममर्थमेव बोधयति । असम्भवबोधकप्रमाणानि तु भक्तेरिव स्वयत्नसाध्यान्तिमस्मृतेः उपायतया अनपेक्षितत्वं बोधयन्तीति केचिदाचार्या अनुसन्दधिरे ।

अथ अन्तिमस्मृत्यनन्तरमेव विद्वदविद्वत्साधारणो हार्दपरमात्मनि विश्रमः सुषुप्त्यवस्थातुल्यः । अथैतदवस्थाया अनन्तरं प्राज्ञप्रबोधितः प्रविष्टश्च ब्रह्मनाड्यां सकृद्विभातं यावत्कालतत्त्वमपुनस्स्वापं जागर्तीति ॥

## २१. गतिचिन्तनम्

अथ वत्सलो हार्दः परमात्मा स्थूलशरीरलक्षणब्रह्मपुरात् ब्रह्मनाडीरूपप्रधानद्वारेण एनं मुमुक्षुं प्रस्थाप्य अर्चिरहः पूर्वपक्षोत्तरायणसंवत्सरवाय्वादित्यचन्द्रामानवसंज्ञकवैद्युतपुरुष तत्सहकारिवरुणेन्द्रप्रजापत्यभिधानैः अतिवाहिकैः प्रसिद्धतत्तल्लोकपालैः नित्यसूरिभिर्वा स्वयमेव देवयानपथं गमयत्यनुभावयति च तत्तल्लोकपालकृतां सपर्याम् ॥

अथ चिरकालकाङ्क्षितं देशविशेषं प्रापय्य कर्मफलविशेषभोगार्थतया विना केवलविद्ययावस्थापितं गत्यर्थमेव अनुवर्तमानं सूक्ष्मशरीरं नदीतरणायोपात्तं पोतमिव विनिवर्त्य विरजां तारयित्वा दिव्यशरीरं प्रदाय ऐरंमदनामकं सरोविशेषं सोमसवनसंज्ञकमश्वत्थं च उपगमय्य मालाञ्जनचूर्णवासोभूषणहस्तानामप्सरसां पञ्चशत्या अभ्यागमय्य ब्रह्मालङ्कारं कारयति ॥

अथास्मिन् ब्रह्मगन्धरसतेजांसि प्रवेश्य भगवतः कुलदासाः समागता इति अत्यादरेण क्रमशः प्रत्युद्गच्छत्सु मकुटालङ्कृतेषु नित्यसूरिषु दिव्यध्वजपताकतोरणाद्यलङ्कृतं अत्युच्चातिदीर्घप्राकारालङ्कृतं गोपुरद्वारं इन्द्रप्रजापत्यभिधानौ तत्पालकौ सङ्गमय्य पूर्णकुम्भाद्यप्राकृतराजोपचारान् कारयित्वा आनन्दमयमणिमण्टपे दिव्यास्थाने प्रवेश्य आत्यन्तिकदुःखनिवृत्त्यर्थं यथामनोरथं निरतिशयभोग्यमात्मानं स्वयमेव प्रदर्श्य गुणाष्टकाविर्भावं संपाद्य स्वचरणारविन्दोपधानतया स्वीकरोति । अथ समानभोगत्वलक्षणसायुज्यप्रदानेन कालतः स्वरूपतोपरिच्छिन्नानन्दैः नित्यसूरिभिः सहावस्थापयति ।

इत्थं समस्तप्रतिबन्धकनिवृत्तिपूर्वकं स्वस्वरूपाविर्भावपूर्वकं च देशकालावस्थासङ्कोचरहितं स्वमनोरथानुगुणैतदीयमनोरथविषयीभूतं यावदात्मभाविनं सर्वं कैङ्कर्यवर्गमनुगृह्य सवयोभिरिव स्थितैः नित्यसूरिभिः सार्धं इदानीमेवागतेनानेन च निर्विशेषं संश्लिष्य ऐकान्तिकात्यन्तिकनित्यकिङ्करभूतस्य अस्य आनन्देन स्वयं निरतिशयानन्दभाग्भवति ।।

अत्र वस्वादिपदप्राप्तिपूर्वकमोक्षसाधनीभूतमधुविद्यादिनिष्ठानां सत्यलोकादेव मोक्षमधिगच्छतां चाधिकारिविशेषाणामुपदिश्यमानाः मार्गक्रमविशेषाः तत्तदधिकारिणामेव ज्ञातव्या इति नात्र विविच्य कथनमपेक्षितम् ॥

इत्थं स्वतन्त्रप्रपत्तिनिष्ठस्य अर्चिरादिगत्यनुसन्धानादिकं सद्वारकप्रपत्तिनिष्ठस्येव उपायाङ्गतया प्रत्यहमकर्तव्यमपि प्रपत्त्युपायानुष्ठानवेलायाम् अधिकारसिद्ध्यर्थं फलार्थितायां सत्यां फलपर्वविशेषानुसन्धानरूपतया तत्रान्तर्भवति । प्रपत्त्यनन्तरं तु पूर्वप्रार्थितपुरुषार्थस्मरणरूपं सत् निरतिशयं पुरुषार्थं प्राप्स्यामीति प्रीत्यतिशयं परिपोषयच्च सत् स्वयं प्रयोजनं भवति । तस्मादत्र समुदायज्ञानादपि अपेक्षितसिद्धिरस्तीति सिद्धम् ॥

## २२. परिपूर्णब्रह्मानुभवः

अथानेन गतिविशेषेण परमं पदमुपगतवतः सर्वदेशसर्वकालसर्वावस्थास्वपि सर्वेश्वरं अनन्तगुणविग्रहविभूतिचेष्टितेषु क्वचिदपि सङ्कोचमन्तरेण निरतिशयभोग्यतया विषयीकुर्वन्ननुभवः परिपूर्णानुभव इत्युच्यते । अस्मिन्ननुभवे निरतिशयभोगरूपे मुक्तानां भगवतश्चेषदपि वैषम्यविरहात् परमं साम्यमित्युच्यते ॥

अत्र भगवत्स्वरूपस्य भोग्यत्वात् तदनुबन्धी सर्वोऽपि प्रकारः भोग्यः भवति मुक्तानाम् । यथा राजमहिष्याः भोग्यभूतस्य राज्ञःसम्बन्धि भोग्यभोगस्थानभोगोपकरणादिकम्, अतस्सर्वप्रकारविशिष्ट एव सर्वेश्वरो भोग्यः । अत्र निरतिशयानुकूलत्वात् परमप्राप्यत्वाच्च भगवत्स्वरूपं परिपूर्णानुभवप्राप्तेः भोग्यभूतसत्त्वोत्तरदेशविशेषप्राप्त्यनन्तरभावित्वात्। तादृशो देशविशेषः , अस्य चानुभवस्याश्रयतयानुभाव्यत्वात् भगवद्विभूतिभूतं ज्ञानानन्दलक्षणं स्वस्वरूपं चेत्येतत्त्रितयं परमं पदमित्युच्यते ॥

अथ भगवत्स्वरूपरूपगुणविग्रहादेः नित्यविभूतेः स्वस्वरूपस्य च भोग्यत्वेपि प्रतिकूलतया प्रत्यक्षादिप्रमाणप्रप्रसिद्धं मुमुक्षोः त्याज्यतया शास्त्रविहितं लीलाविभूतिगतं वस्तुजातं कथं भोग्यं स्यात्? इतिचेत्:- पित्तोपहतस्य प्रतिकूलमपि क्षीरं पित्तोपशान्त्यनन्तरं यथानुकूलमेव भवति, यथा वा निगलबन्धनबद्धस्य राजकुमारस्य प्रतिकूलमपि कारागारं विमोचनानन्तरं सार्वभौमपितृसमानभोगस्य तस्यैवानुकूलं भवति तथा भगवत्संश्लेषविरहदशायां कर्मानुगुणं प्रतिकूलमल्पानुकूलं चेदं वस्तुजातं निरन्तरभगवदनुभवदशायां निरतिशयभोग्यवर्ग एवान्तर्भवितुमर्हति । इत्थं बन्धमुक्तिदशाभेदेन तेषामेव वस्तूनां स्वभावभेदः भगवत्सङ्कल्पभेदनिबन्धनः ॥

परिपूर्णानुभवजनितप्रीतिविशेषस्य परीवाहरूपं कैङ्कर्यमिति सर्वत्र सुस्पष्टम् । तदानीं श्रुतिसिद्धं जक्षणादिकं ज्ञात्यादिसम्पादनं च पुण्यपापरूपकर्मनिरपेक्षभगवदिच्छानुगुणस्वेच्छानिबन्धनतया कर्मफलविलक्षणासम्भवपरीवाहरूपकैङ्कर्यान्तर्भूतत्वात् प्राप्तिरूपं सत् यथाभिमतकैङ्कर्यपर्यन्तः परिपूर्णपरब्रह्मानुभव एव ॥

सोयमनुभवः उत्तरावधिरहितः । भगवत्कैङ्कर्यान्तर्भूतस्वच्छन्दविहारेण लीलाविभूतिप्रवेशेऽपि एतदनुभवसङ्कोचविरहात् पुनरावर्तिर्नास्तीत्यभिधीयते । इत्थमुत्तरावधिरहितमिमममनुभवं प्राप्स्यतां चरमं शरीरं देवमनुष्यादिषु कीदृशमिति न ज्ञायते । यस्मात् ब्रह्मादीनां धर्मव्याधादीनां च मोक्षः श्रूयते । तस्मात् मुमुक्षुदशायाम् उत्कर्षापकर्षाभ्यां मुक्तिदशायां अनुभवतारतम्यं वदन्तः सर्वेषां मुक्तानां ब्रह्मणश्च परमसाम्यप्रतिपादकश्रुत्यादिकं विस्मरन्ति । आचारवैकल्यवतां मुमुक्षूणामानन्दह्रास इति केषाञ्चिद्वचनं प्रामाणिकमपि मुक्तिप्राक्कालिकानुभवसङ्कोचाभिप्रायकम् ॥

प्राक्तनमुक्तापेक्षया इदानींतनमुक्तानां ब्रह्मानुभवांशे कालकृतसङ्कोचे सत्यपि अनुभवस्वरूपे न विशेषः । विष्णुलोकादिषु सालोक्यसामीप्यादिभाजां मुक्तव्यपदेशस्तु अदूरविप्रकर्षनिबन्धनः । परमपदप्राप्त्यनन्तरभावि सायुज्यमेव मोक्षपदस्य मुख्यार्थः । तादृशे च मोक्षे सालोक्यादिकं सर्वं सहस्रे शतादिकमिव अन्तर्भूतम्, तस्मात्तत्र नास्ति परस्परं वैषम्यम् ॥

तत्र सायुज्यं सयुजो भावः । सयुक्च एकस्मिन् भोग्ये भोक्ता सन् सहान्वयी । प्रकृते सप्रकारपरब्रह्मरूपे भोग्ये परमात्मा मुक्तश्च सहभोक्तारौ भवतः । अतः मुक्तः सयुगित्युच्यते । भोग्ये तारतम्यराहित्यं सायुज्यपदार्थः । भोगे तारतम्यराहित्यं तु सार्ष्टितापदार्थः इत्यनयोः क्वचित् सहप्रयोगेपि न पौनरुक्त्यम् ॥

मुक्तस्य जगद्व्यापाराभावेऽपि कृषिकर्ता पिता निर्व्यापारस्तत्पुत्रादिश्च यथा कृषिफलमनुभवतः तथा जगद्व्यापारजनितमानन्दं स्रष्टा परमेश्वरः द्रष्टा मुक्तश्च सममनुभवतः। अतः मुक्तस्य ज्ञानस्वरूपभोगादिभिरेव परमं साम्यं, जगत्कारणत्व-मोक्षप्रदत्व-सर्वाधारत्व-सर्वनियन्तृत्व-सर्वशेषित्व-सर्वशरीरत्व-सर्वशब्दवाच्यत्व-सर्ववेदवेद्यत्व-सर्वलोकशरण्यत्व-सर्वमुमुक्षूपास्यत्व-सर्वफलप्रदत्व-सर्वव्याप्तज्ञानानन्दस्वरूपत्व-लक्ष्मीसहायत्वादयः छत्रचामरादिवत् लक्षणतया अभिधीयमाना धर्माः ईश्वरस्यैव प्रतिनियताः । मुक्तस्य तु आधेयत्वशेषत्वाणुत्वादयो धर्माः व्यवस्थिताः ॥

क्वचिन्मुक्तः स्वतन्त्र इति वचनमकर्मवश्यार्थकम् । तर्हि अस्वतन्त्रस्य मुक्तस्य कदाचित्केनापि हेतुना पुनरावृत्तिः स्यात् । इति चेत् -हेतुविरहादिति प्रतिविधीयते । अत्र हेतुः-किं स्वेच्छा उत भगवदिच्छा । नाद्यः, मुमुक्षुदशायामाविर्भूतमैश्वर्यकैवल्यविषयकं वैराग्यं, मुक्तदशायां ब्रह्मात्मकतयैव सर्वसाक्षात्कारेण केवलानुभवप्रसङ्गविरहात् पुरुषार्थान्तरदोषाणां नित्यं प्रत्यक्षीकृतत्वेन तदभिलाषासम्भवाच्च प्रतिष्ठितं भवति । मुमुक्षुकालिकं चिदचिदीश्वरविषयकं हेयोपादेयविषयकं च ज्ञानमिदानीं विच्छेदसङ्कोचरहितं सत् विकसितं भवति । भगवद्विषयवैलक्षण्येन पूर्वमुत्पन्नं भक्तिशब्दवाच्यं प्रीतिरूपापन्नं ज्ञानमिदानीं शास्त्राणामप्यगोचरीभूतस्य भगवद्वैलक्षण्यस्य साक्षात्कृतत्वेन निरतिशयप्रीतिरूपतापत्त्या परिपूर्णम् । तस्मात् वैराग्यज्ञानभक्तीनां सङ्कोचाभावात् न स्वेच्छया पुनरावृत्तिशङ्का ॥

नान्त्यः- मुक्तस्य भगवति प्रीतेः निरतिशयदशापत्त्या भगवतोप्यस्मिन् प्रीत्यतिशयः स्वेनाप्यपरिच्छेद्यः सन् एतदीयेष्वपि प्रवहति । शास्त्रवश्यतारूपाधिकारस्य निवृत्तत्वात् मुक्तिदशायामाज्ञातिलङ्घनं नास्ति । नास्त्यैव च भगवत्प्रीत्यैव स्वस्य प्रीतिमत्त्वात् भगवदनभिमतानुष्ठानम्। तस्माद्भगवद्विषयका प्रीत्याज्ञातिलङ्घनविरुद्धाचरणानामसम्भवात् भगवतोप्यस्मिन् अप्रीत्यनुदयात् न भगवदिच्छयापि पुनरावृत्तिशङ्का ॥

तस्मात् कैङ्कर्यपर्यन्तपरिपूर्णब्रह्मानुभवरूपमोक्षाख्यः पुरुषार्थः अर्चिरादिना देशविशेषप्राप्तेरनन्तरं यावदात्मभावीति सिद्धम् ॥

## २३. सिद्धोपायशोधनम्

इत्थमनादेः कालात्संसरतः अवसरप्रतीक्षभगवत्कृपया समीचीनशास्त्रमुखेन तत्त्वहितपुरुषार्थविशेषान् विज्ञातवतो मुमुक्षोः स्वाधिकारानुरूपं कञ्चनोपायविशेषं परिगृह्य कृतकृत्यस्य अस्य यथाशास्त्रं निरपराधं चानुष्ठेयस्य कैङ्कर्यरूपपुरुषार्थस्य प्रकारः शरीरपातानन्तरं अर्चिरादिगत्यप्राकृतदेशविशेषप्राप्त्यनन्तरभाव्यनवच्छिन्नभगवदनुभवपरीवाहलक्षणपरिपूर्णकैङ्कर्य रूपपरमपुरुषार्थसिद्धिप्रकारश्च निरूपितः॥ अयमर्थानुशासनभागः ॥

अथ स्थिरीकरणभागः । तत्र सिद्धोपायसाध्योपायैतत्प्रभावविषयको विचारः प्रवर्तते । तन्निर्णयस्य अस्माकं सहसानुत्पादस्तु पूर्वापराधमूलकस्वतन्त्रेश्वरसङ्कल्पाधीनः । तादृशसङ्कल्परूपनिरोधनिवृत्तिश्च लक्ष्मीकटाक्ष-सदाचार्यानुग्रह-सत्सम्प्रदायसिद्धिरूपप्रधानकारणत्रितयायत्ता । तत्र लक्ष्मीकटाक्षः 'अस्तु मे' इति प्रार्थनायां, 'अस्तु ते तयैव सर्वं सम्पत्स्यते' इति श्रीसूक्तिसिद्धः प्रसादः । सदाचार्यानुग्रहः तस्य व्याजविशेषाः फलविशेषाश्च पराशरमैत्रेयसञ्जयाश्वलायनादिवृत्तान्तेषु सुव्यक्ताः । सत्सम्प्रदायसिद्धिस्तु स्वस्मिन् सत्त्वोत्तरे सम्यगुपपन्ने सावधाने च सति ख्यातिलाभपूजानिरपेक्षस्य कारुण्यपरतन्त्रस्य सदाचार्यस्य सकाशात् प्रथमाचार्यसर्वेश्वरप्रभृत्युपदेशपरम्पराप्राप्तस्य अनपेक्षितविस्तारापेक्षितसङ्कोचरहितस्य तत्त्वहितविषयकोपदेशस्य संप्राप्तिः ॥

बहुक्लेशे बुद्धिचलनकारणे च शास्त्रपरिश्रमे अनधिकृतानां परमास्तिकानामयमेवोपदेशः प्राधान्येनोपादेयः । इतरेषां तु स्वज्ञानाय कुतर्कव्यामूढज्ञापनाय च समीचीनयुक्तिभिः सह श्रोतव्यः । एवंविधश्रवणविधुराः केचिद्-हैतुकाः वेदविरुद्धतत्त्वकल्पनया प्रामाणिकानर्थानपहरन्ति । स चापहारः विभूतिविषयकः विभूतिमद्विषयकश्च । तत्र द्वितीयः - श्रियः पत्युः सर्वेश्वरस्य अपह्नवः, अतिरिक्तस्येश्वरत्वकल्पनं, सर्वेश्वरस्य विभूतिकोट्यन्तर्भावश्च । प्रथमस्तु प्रकारान्तरेण विभूत्यपह्नवः, अङ्गीकारेपि तस्याः सम्बन्धं भगवतः प्रतिषिध्य स्वतन्त्रीकरणं, पारतन्त्र्येपि स्वस्य वा स्वसदृशस्य वा शेषीकरणं च ॥

अत्र यःकश्चिदपहारो मृदुप्रज्ञस्य प्रपन्नस्य विपरीतसंसर्गवशात् समागतश्चेत् स्वदत्तापहारे पर्यवस्येत् । तस्माद्बहुविधेषु व्यामोहकारणेषु हैतुकसंसर्गोत्यन्तं दूरपरिहरणीयः । यस्मादस्य तादृशसंसर्गवशात्

बाह्यत्वासम्भवेपि व्यामोहसम्भवः सदाचार्यकटाक्षात् तत्परिहारश्च तत्र तत्र श्रूयते । तस्मादारुरुक्षूणां तत्त्वेषु व्यामोहः सम्भावित एवेति युक्तः स्थिरीकरणभागारम्भः ॥

तत्र यथोद्देशं सिद्धोपाये शङ्कापरिहारानुदाहरिष्यामः । ताश्च शङ्काः स्वातन्त्र्यसहजकारुण्यमूलाः शेषशेषिभावसम्बन्धविशेषमूलाः पत्नीसम्बन्धमूलाश्चेति त्रिप्रकाराः । तत्र आद्याः -- अनादेः कालात् चेतनमिममनादृतवतः परमेश्वरस्य इदानीं कस्यचित्स्वीकरणं केवलस्वातन्त्र्यनिबन्धनं, तस्मादस्माकं किमर्थमुपायानुष्ठानमिति काचिदाशङ्का । ईश्वरः स्वतन्त्रोपि वैषम्यनैर्घृण्यदोषपरिहाराय कस्मिंश्चित् चेतने कञ्चनव्याजविशेषमुत्पाद्य तं पुरस्कृत्य रक्षतीति तत्र समाधिः । व्याजविशेषोपि ईश्वरसङ्कल्पाधीनश्चेत् पूर्वमेव कुतस्तथा न सङ्कल्प इति शङ्कायां कर्मप्रवाहस्य अनादित्वात् विषमविपाकसमयत्वात् कर्मानुगुणफलप्रदत्वाभावे वैषम्यदोषप्रसङ्गाच्च अद्यपर्यन्तं व्याजविशेषस्यापि अनवसर इति कार्यविशेषदर्शनेन कल्पनेति समाधानम् ॥

ईश्वरस्वातन्त्रस्यैव नियामकत्वाभ्युपगमे तु इतः प्राक् कदापि असञ्जातस्य मोक्षश्रद्धादेः इदानीमेव उदये किं निदानमिति पर्यनुयोगो निरुत्तर एव भवेत् । अनादिकर्मप्रवाहवैचित्र्यस्य निदानत्वाभ्युपगमस्तु ईश्वराङ्गीकर्त्रनङ्गीकर्तृसाधारणः । तर्हि ईश्वरस्वातन्त्र्यं विफलमिति चेत् न- कञ्चिद्व्याजविशेषमवलम्ब्य अभीष्टसमय एव संरक्षणौन्मुख्यस्य तन्निवारकस्वतन्त्रान्तरराहित्यस्य च स्वातन्त्र्यनिबन्धनत्वात् ॥

इत्थं चेमं चेतनं लीलोपकरणं कर्तुं प्रधानकारणमीश्वरस्वातन्त्र्यम् । सहकारि कारणं प्रवाहानादिभूतं स्वतन्त्राज्ञातिलङ्घनम् । तथा भोगोपकरणं कर्तुं स्वाभाविकमीश्वरकारुण्यं प्रधानकारणम् । सहकारिकारणं वशीकरणविशेषः । स च यादृच्छिकसुकृतविशेषमूलकेश्वरकृपानिबन्धनः कारुण्यप्रवाहप्रतिरोधकनिग्रहशमनद्वारकश्च । एवमीश्वरस्वभावं वैषम्यनैर्घृण्यराहित्यं बन्धमोक्षादिव्यवस्थां च यथाप्रमाणमनुसन्धाय स्वातन्त्र्यविशिष्टं कारुण्यमेवावलम्बेत ।

यतः निष्करुणस्य स्वातन्त्र्यं कदाचित् बाधकं स्यात् । अस्वतन्त्रस्य कारुण्यं परेषामनुपकारकं स्वस्यापि क्लेशावहं , स्वतन्त्रकारुण्यं तु सत्यसङ्कल्पत्वात् स्वस्यानन्दावहं आश्रितानामनिष्टनिवृत्तौ इष्टप्राप्तौ च समर्थं भवति । अत एव अवतारवृत्तान्तेषु श्रूयमाणं दुःखपलायनादिकम् आसुरप्रकृतिमोहनाय सात्त्विकप्रकृतिरञ्जनाय चाभिनयमात्रम् । तदपि कृपामूलकं स्वतन्त्रस्य लीलारसावहं च ॥

एवं परहितव्यापाराश्रयत्वात् आश्रितरक्षकः । उपायान्तरस्थाननिवेशादुपायः । रक्षणव्यापारफलाश्रयत्वात् शेषी, अत एव प्राप्यश्च भवतीत्येवं प्रकारवैशिष्ट्यं स्वरूपप्रयुक्तमिति धर्मिग्राहकमानसिद्धम् । तस्य चेश्वरस्य ज्ञानं शक्तिः कारुण्यं च प्रधानो गुणः । तत्र ज्ञानशक्ती निग्रहानुग्रहसाधारणे । कारुण्यमनुग्रहसाधारणम् । तच्च परहितप्रावण्यलक्षणम् ।

तदेतत्कारुण्यं सर्ववस्तुसत्तास्थितिप्रवृत्तिषु मुक्तानामनावृत्तौ, लीलाविभूतिसृष्टौ, स्वावताररूपशुद्धसृष्टौ, शास्त्रप्रवर्तने, तद्द्वारा तत्त्वहितविषयकज्ञानोत्पादने, मोक्षश्रद्धाजनने तद्व्याजभूतसुकृतविशेषे, तत्तदधिकारानुरूपनिग्रहशमनोपायप्रदाने, तत्र मनसादिकरणप्रेरणे, उपासकस्यान्तरायप्रतिसमाधाने, अकिञ्चनस्योपायान्तरस्थानावस्थाने, व्याजमात्रेणानादिकालसञ्चितानन्तापराधानादरणे, संसारनिवृत्तिपूर्वकानन्तसुखानुभवप्रदाने, आर्तानां तदानीमेव मोक्षप्रदाने, यावज्जीवं निरपराधप्रवृत्तिरूपफलमप्रार्थयमानानां दृप्तप्रपन्नानां प्रारब्धकर्माधीनापराधस्य अनुतापादिजननेन अधिकारानुरूपप्रायश्चित्तविशेषप्रवृत्त्युत्पादने, अमृदुप्रकृतीनां यमविषयगमनमपेक्षितफलप्रतिबन्धं च अन्तरेण उपक्लेशलक्षणशिक्षणे च प्रधानं सामान्यनिदानम् ॥

एवंभूतकृपाविशिष्टः परमेश्वरः सर्वपुरुषार्थसाधकत्वात् पूर्वसिद्धत्वाच्च सिद्धोपायः । तस्य प्रसादनभूतः भक्तिप्रपत्त्यादिः तत्तत्फलार्थिसाध्यत्वात् साध्योपायः । अत्र प्रपदनमधिकारिविशेषणं, अनुपाय इति च केषाञ्चिदभिधानं प्रपदनस्य अधिकारिविशेषणलक्षणशून्यत्वात् यंकञ्चनाधिकारिणं प्रति कर्तव्यतया विधीयमानत्वात् उपासनादेरप्यधिकारिविशेषणत्वप्रसङ्गात् साक्षान्मोक्षोपायत्वबोधकानेकप्रमाणदर्शनाच्च सिद्धोपायप्राधान्याभिप्रायमूलकमिति मन्तव्यम् ॥

तस्य प्राधान्यं च प्रसादनेन निग्रहशान्तौ सत्यां स्वाभाविकानुभवप्रयोजकत्वात्। तद्यथा- महारत्नस्य कल्मषनिवृत्तौ सत्यां स्वाभाविकः प्रभाविकासः तदनुगुणभगवत्सङ्कल्पमात्राधीनः । तथा मुक्तस्य ज्ञानविकासोऽपि तदनुगुणसङ्कल्पविशेषमूलकः । तस्मात् सिद्धोपायप्राधान्येपि तद्वशीकरणार्थसाध्योपायानुष्ठानस्य न कोपि विरोधः ॥

अथ सम्बन्धविशेषमूलकशङ्कापरिहारः --

सर्वेश्वरे सर्वशेषिणि परमात्मनि स्वात्मसमर्पणं रक्षणप्रार्थनं विश्वसनम्, एवमादिकं सर्वं स्तनन्धयप्रायाणां अस्माकं मातृस्तन्यस्य शुल्कप्रदानवत्स्वरूपविरुद्धमिति शेषिभूतसिद्धोपायमुखेन साध्योपायस्वरूपं केचिन्निघ्नन्ति । प्रतिघ्नन्ति च तान् महर्षीणां श्रीभाष्यकारादीनां च विश्वासपूर्वकप्रार्थनात्मनिक्षेपाद्यनुष्ठानं तत्र शास्त्रसम्प्रदायः उपदेशपरम्परा च । तस्मात् शेषित्वादिसम्बन्धस्य नित्यत्वेपि शेषरक्षणस्य शेषिणः प्राप्तत्वेपि कर्मवश्यानस्मान् ईश्वरः कस्यचित्साध्योपायविशेषस्य पुरस्कारं विना न रक्षतीति शास्त्रवश्यसिद्धान्तः ॥

अथ च शास्त्रमनादृत्य केवलयुक्त्यवलम्बने ईश्वरस्यैव असिद्ध्या शेषशेषिभावसम्बन्धोपि न सिद्ध्येत् । अतः " परमेश्वरः शेषी रक्षणे प्राप्तः शेषभूतोयमप्राप्तः" इति कथनं रक्ष्यरक्षकभावस्य लोकदृष्टप्रक्रियया औचित्यप्रदर्शनपरं न तु सम्बन्धमात्रस्य निरपेक्षकारणत्वप्रदर्शनपरम् । सम्बन्धमात्रस्यैव नियामकत्वे सर्वमुक्तिप्रसङ्गः । स्वातन्त्र्येण व्यवस्थापने तु पूर्वोक्तरीत्या वैषम्यनैर्घृण्यप्रसङ्गश्च ।

अथ तादृशसम्बन्धज्ञानमात्रमपेक्षितं न तु रक्षापेक्षादिकमतो नानुपपत्तिरित्ययुक्तम् । सम्बन्धज्ञानरहितानामपि अचिद्द्रव्याणां मृगपक्ष्यादीनां स्तनंधयादीनां च रक्षापेक्षारहितानां रक्षणस्य लोके दर्शनात् ॥ तथा दर्शनेन शास्त्रबलात् सम्बन्धज्ञानमपेक्षितमिति चेत् शास्त्रबलादेव रक्षापेक्षाप्यपेक्षणीया स्यात् । अथ सम्बन्धसहितः प्रतिषेधाभावोपेक्षित इति चेत् सुषुप्त्याद्यवस्थासु सर्वमुक्तिप्रसङ्गः । अथ प्रतिषेधयोग्यदशाकालीनतादृशप्रतिषेधाभावो विवक्षित इति चेत् प्रतिषेधयोग्यतारहितानामचितां प्रतिषेधतां च पशुपुत्रादीनां रक्षणाभावप्रसङ्गः ।

तर्हि स्वरक्षणार्थव्यापारे स्वस्य नान्वयब् इत्याप्तवचनस्य किं तात्पर्यमिति चेत् यथाप्रमाणं स्वरक्षणोपयिकभरसमर्पणानन्तरं स्वरक्षणार्थव्यापारे स्वस्य नैवान्वयः । पूर्वमनुष्ठितः समर्पणव्यापारोपि सर्वकर्त्रा भगवता बीजाङ्कुरवदनादिभूतकर्मप्रवाहविशेषाधीनयादृच्छिकसुकृतविशेषरूपकारणद्वारा कारितः । अतस्सर्वरक्षको भगवानेव स्वयमस्मान् कस्मिंश्चिदुपायविशेषे प्रवर्त्य तद्द्वारा प्रसन्नः संरक्षतीति वर्तितव्यमित्यत्र तात्पर्यं,अन्यथा भोजनादिलौकिकव्यवहारप्रवृत्त्यादिकमपि परित्यक्तव्यं स्यात् । एवं च भरसमर्पणदशायां ख्यातिलाभपूजाफलसङ्गकर्तृत्वोपायरूपकल्मषरहितानुसन्धानप्रकारत्वित्थं सङ्गृह्यते --

स्वामी स्वशेषं स्ववशं स्वभरत्वेन निर्भरम् ।

स्वदत्तस्वधिया स्वार्थं स्वस्मिन्न्यस्यति मां स्वयम् ॥ इति ॥

तस्मात् जननीस्तन्यस्येव स्वतस्सिद्धस्येश्वरप्रसादस्य स्तनंधयसमवेतस्तनपानव्यापार इव अस्माकीनरक्षापेक्षादिः व्यापारः सफल एव । सिद्धोपायस्वरूपमपि निरस्तसमस्तदोषशङ्कालेशावकाशमिति ॥

अथ पत्नीसम्बन्धनिबन्धनशङ्कापरिहारः --

लक्ष्म्याः मोक्षं प्रति उपायत्वं नास्ति मुक्तं प्रति उपेयत्वं पुनरस्तीति केषाञ्चित् सिद्धान्तः । अत्र मीमांस्यते -- अनन्योपायत्वविरुद्धोपायद्वित्वप्रसङ्गात् नोपायत्वं श्रिय इति चेत् अनन्यप्रयोजनत्वविरुद्धप्राप्यद्वित्वप्रसङ्गात् प्राप्यत्वमपि परित्यक्तव्यं स्यात् । स्वातन्त्र्यकारुण्यविशेषैरेव भगवतो रक्षकत्वमभिदधतां नेष्टापत्तिरत्र सम्भवति श्रिय इव उपायविशेषणीभूतगुणविग्रहव्यापारविशेषाणामपि परित्यागप्रसङ्गात् ।

अथ गुणादीनामुपयोगविशेषसम्भवात् न परित्याग इति चेत् तदेतत् पत्नीसम्बन्धरूपविशेषणेपि तुल्यम् । उपयोगविशेषस्तु तत्तद्वस्तुस्वभावानुगुणः । प्रकृते पुरुषकारत्व-अनुमतिप्रदातृत्व-भरस्वीकर्तृत्वादिः प्रमाणसम्प्रदायसिद्धो वेदितव्यः । पराङ्कुश-हिरण्यगर्भ-काश्यप-शौनक-पराशर-श्रीपति-यामुनार्य-रामानुजाचार्य-कूरेश-श्रीवत्साङ्कमिश्र-वृद्धमुनिप्रभृतयोपि इत्थमेव श्रिय उपयोगविशेषं स्वस्वप्रबन्धेषु उदाजहुः । तस्मात् श्रिया गुणविग्रहादिभिश्च विशिष्ट एव परमेश्वरः उपेय इव उपायोपीति सिद्धम् । विशिष्टैक्यात् उपायैक्यव्यपदेशः ॥

अथ सर्वमप्युपायविशेषणं परित्यज्य केवल धर्मिण एव उपायत्वमुच्यत इति चेत्, तर्हि -- उपायत्वमपि तत्र परित्यक्तव्यं स्यात् तस्यापि विशेषणत्वात् । अतः विशेषणप्रयुक्ते सातिशयेन विशेष्यस्य वैगुण्यं न शङ्कितुं युक्तम् । किञ्च-- विशेष्यस्य विशेषणप्रयुक्त एव अतिशय इति न नियमः,स्वरूपानुबन्ध्यतिशयस्यापि प्रमाणप्रसिद्धत्वात् । एवं विशेषणीभूतश्रियोपि स्वरूपानुबन्ध्यतिशयोस्ति । अत एव अन्योन्यातिशयावहत्वेन विशेषणविशेष्ययोः निर्देशः । उभयोरपि व्यासज्य वृत्त्यैकशेषित्वाश्रयत्वात् हविर्विशेषेऽग्नाविष्णुप्रभृतीनामिव आत्महविस्समर्पणप्रतिसम्बन्धित्वं, एवं नित्यपतिपारार्थ्यात् यागकर्मणीव पतिप्राधान्येन शास्त्रप्रवृत्तिः । यजमानैक्यमिव एकत्वव्यपदेशश्च । तस्मात् श्रियो भगवत्स्वरूपनिरूपकत्वेन तत्प्रतीत्यन्तर्भूतत्वात्भगवन्तमभिदधत्सर्वमपि वाक्यं श्रियमप्यभिधत्ते इति सम्प्रदायः ॥

अथ सर्वस्याप्यवस्थासु --- श्रियो भगवदविनाभूतत्वे भगवदालयादिषु श्रियः पृथक्प्रतिष्ठार्चनादिकं कथमुपपद्यते इति चेत् अत्र उच्यते--- भगवतोऽर्चारूपं त्रिविधम् । अधिकारो लयो भोगश्चेति । तत्र कामप्रधानं रूपमधिकारः मदनगोपालादिरूपम् । मोक्षप्रधानो लयो भोगश्च रामकृष्णादिरूपम् । सर्वपरिवाराणां भगवदन्तर्भावेनार्चनं लयः । पृथगर्चनं भोगः । एवं श्रीरूपमपि त्रिविधम् । आलयसमृद्ध्यर्थं पृथक्प्रतिष्ठापितमधिकारार्चनम्, भगवतः वक्षःस्थलस्थितं लयः पार्श्वस्थितं भोग इति । तत्राधिकाररूपश्रीरूपस्य आलयादिसमृद्ध्यर्थतया शास्त्रचोदितत्वात् नानुपपत्तिः ॥

तर्हि लयभोगार्चनपराणां अनन्यप्रयोजनानां मुमुक्षूणां काम्यप्रधानाधिकारार्चनप्रणामादिकं कथमिति चेन्न , तत्रापि विष्णुपत्नीत्वस्य सुप्रतिष्ठितत्वात् काम्यप्रधानभगवद्रूपेष्विव मातृत्वस्वामित्वाद्युपाधिकप्रणामाद्याचाराणामनुपपत्तेः अभावात् । तस्मात्सिद्धोपायशब्दवाच्यमीमांसायामेकशेषित्वाश्रयत्वात् एकाभिप्रायवत्त्वात् परस्परप्रावण्याश्रयवत्त्वात् स्वरूपरूपादिषु अपृथक्सिद्धसंसर्गविशेषवत्त्वात् सुश्लिष्टं श्रीविशिष्टमेव परमात्मानं श्रीमन्नारायणशब्दः प्रतिपादयतीति सात्त्विकानां सिद्धान्ततत्त्वम् ॥

## २४. साध्योपायशोधनम्

एवं परिशोधितेपि सर्वज्ञे सर्वशक्ते परमकारुणिके सर्वशेषिणे सपत्नीके सर्वलोकशरण्ये सिद्धोपायविशेषे विज्ञातेपि संपूर्णेपि संसारवैराग्ये अनाद्यनुवृत्ताज्ञातिलङ्घनमूलकभगवन्निग्रहप्रशमननिदानस्य साध्योपायविशेषस्य विज्ञानाभावे सिद्धोपायो न शक्यते वशीकर्तुम् । तस्मात् साध्योपायविशेषजिज्ञासायां सत्याम् अधिकारे स्वरूपे परिकरे च समाशङ्कितान् दोषान् परिहरिष्यामः--- तत्र आदावधिकारगोचरविचारः ।

प्रपत्तिः खल्वेषा कश्चन वैदिकधर्मः । यागविशेषतया न्यासविद्यायामनुश्रूयते । सा कथं सर्वाधिकारा भवितुमर्हति इति केचिद्विवदन्ते । सोऽयं विवादः सर्वेश्वरस्य

सर्वशरण्यत्वप्रतिपादकश्वेताश्वतरश्रुत्यादिप्रमाणसहस्रेण परिहृतः भवति । उपासनस्य त्रैवर्णिकाधिकारत्वे समर्थितेपि प्रपदनस्य सत्यवचनादिवत् सामान्यधर्मत्वावगमात् यथाधिकारं वैदिकमन्त्रेण वा तान्त्रिकमन्त्रेण वा सर्वेषामेतदनुष्ठानस्य नानुपपत्तिः । अत एव काकादीनामपि प्रपन्नत्वं शास्त्रेषु श्रूयते । भगवदाश्रयं सामान्यं सर्वसाधारणमिति मां हि पार्थ व्यपाश्रित्येत्यादिना भगवतैवोक्तम्, अतस्तद्विशेषभूतमिदं प्रपदनं सर्वेषां साधारणं भवितुमर्हति ॥

अथोपासनस्यापि सामान्यान्तर्गतत्वात् सर्वसाधारण्यं स्यादिति चेत् सत्यम् । उपासनाप्रारम्भस्यैव त्रैवर्णिकशरीरावच्छिन्नत्वनियमः। तन्निष्पत्तिस्तु यादृशतादृशशरीरावच्छिन्नेष्वपि धर्मव्याधतुलाधारादिषु दृष्टम् । अतः उपासनाप्रारम्भवत्प्रपदनस्य त्रैवर्णिकशरीरावच्छिन्नत्वनियामकवचोविरहात् यादृशतादृशशरीरावच्छिन्नत्वेपि नानुपपत्तिः । तस्मात् शरण्यशरणागतिस्वभावज्ञानवताम् आकिञ्चन्यादिमतां सर्वजातीयानामपि प्रपत्त्यधिकारः सिद्ध्यति ॥

अथास्य स्वरूपविचारः--विश्वासः प्रपत्तिरिति केचिदभिदधते । तदभिधानम् अधिकारकोटौ अङ्गकोटौ च प्रविष्टस्य विश्वासस्य प्राधान्यकथनाभिप्रायकं मन्तव्यम् । तथैव-- प्रपत्तिर्विश्वासः, सकृत्प्रार्थनामात्रेण अपेक्षितं दास्यतीति विश्वासपूर्वकं प्रार्थनमिति यावत् । इति श्रीभाष्यकाराणां मुक्तकवाक्येनापि प्राधान्यविवक्षया प्रथमं विश्वासमभिधाय भरतमुनिप्रणीतलक्षानुरोधेन विश्वासपूर्वकं प्रार्थनं प्रपत्तिरिति निष्कृष्यते । अयमपि निष्कर्षः प्रार्थनायाः रक्षापेक्षामात्रसापेक्षित्वनिबन्धनप्राधान्यविवक्षामूलकः । अन्यथा स्नानं सप्तविधं स्मृतमितिवत् षड्विधा शरणागतिरित्यपि वचनम् प्रपत्तिविधाबोधकं प्रवदेत् । तस्मान्न्यासः पञ्चाङ्गसंयुत इत्यादिप्रमाणबलात् आत्मनिक्षेप एव अङ्गी इतरत्सर्वम् अङ्गमिति साम्प्रतं स्वीकर्तुम् । विवक्षाभेदेन अङ्गानामपि प्राधान्येन निर्देशः राजभृत्ये राजैवायमित्यादि लोकेऽपि प्रसिद्धः ॥

शरणं व्रजेत्यादौ व्रजप्रभृतिधातूनां अध्यवसायवाचकानाम् उपायत्वाध्यवसायाङ्गकन्यासविक्षेपत्यागादिशब्दवाच्य-आत्मयागपर्यन्तत्वकथनं वायव्यं श्वेतमालभेतेत्यादौ आलम्भशब्दस्य संज्ञपनवाचकस्य तदङ्गकयागपर्यन्तत्वमिव वैदिकमर्यादाया अप्यनुगुणम् । यागो नाम अस्यै देवतायै इदं हविरिति कश्चनबुद्धिविशेषः । प्रकृते श्रीमन्नारायणरूपदेवतायै स्वादुतमं स्वात्मरूपमिदं हविरिति बुद्धिविशेषो यागः । एष एव मुमुक्षूणां स्वरूपभरफलसमर्पणरूपदलत्रयात्मकः । क्वचित्स्वप्रवृत्तिनिवृत्तौ भरन्यासव्यपदेशः तत्कार्यत्वात् । एवं च अङ्गपञ्चकसम्पन्नात्मरक्षाभरन्यास एव निखिलप्रपत्तिशास्त्रेषु प्राधान्येन विधीयते इति सिद्धान्तः पूर्वाचार्याणाम् ।

अत्र केचित् परमपुरुषार्थतदुपायापेक्षायां सत्याम् आत्मदास्यमीश्वरस्वाम्यं च स्वभावसिद्धमिति शास्त्रजन्यं तत्त्वज्ञानमन्तरेण न कश्चिद्विधिविषयोस्त्युपायोनुष्ठेयः। तादृशं च तत्त्वज्ञानमेव प्रपदनमिति वदन्ति । तदेतत् अधिकारिकोटिप्रविष्टं वैदुष्यं सर्वपापमूर्धाभिषिक्तस्य आत्मापहारदोषस्य निष्क्रियात्वेन विहितमात्मभरार्पणं न निरुणद्धि , यतः शास्त्रजन्यशेषत्वादिविशिष्टपरावरतत्त्वविवेकवत एव अधिकारविशेषेण परिकरविशेषेण

फलसङ्कल्पविशेषेण च सहितः शेषत्वप्रतिसन्धानगर्भः स्वरक्षाभरन्यासः अनाद्यपराधमूलनिग्रहनिवृत्त्युपायतया विहितः । यतश्चेदं शेषत्वविज्ञानं न्यासोपासनादि सर्वनिवृत्तिधर्मसाधारणम् । तस्मादधिकारलक्षणमेतद्विज्ञानम् । शेषत्वज्ञानं विना मोक्षार्थविहितधर्मानुष्ठानं तु स्वयं शेषत्वज्ञानमुपजनय्य पूर्णानुष्ठानद्वारा मोक्षं जनयति । अतोत्र विधीयमानं न भवति शेषताधीमात्रं किं तर्हि तत्सहितं भरन्यसनमिति ॥

अन्ये तु-- भगवत्युपायत्वाध्यवसाय एव प्रपत्तिः । स च वाक्यमात्रेणसिद्धत्वात् सिद्धोपाय इत्युच्यते । शरणं व्रजेत्यत्र व्रजतेः ज्ञानार्थकत्वादिति प्राहुः । तदपि विधिप्रत्ययघटितशब्दस्वारस्यविरुद्धं, विरुद्धं च सपरिकरप्रपत्तिविधायकस्फुटतरशास्त्रेणापि । भगवदुपायत्वरूपतत्त्वोपदेशपर्यवसानात् प्रपत्तिस्वरुपोच्छेदापादकं चेत्यवधेयम् ॥

परे तु -- मुमुक्षुं प्रति सर्वधर्मस्वरूपत्यागविशिष्टस्वरक्षणार्थस्वव्यापारनिवृत्तिरेव प्रपत्तिः चरमश्लोकेन विधीयते । तत्र निवृत्तौ विध्यसम्भवात् सविशेषणे हीति न्यायेन सर्वधर्मस्वरूपत्यागे विधिः पर्यवस्यति । स एव साध्योपायतया विधीयते इत्याहुः । तत्र विशेष्यस्य निवृत्तिरूपत्वेपि तद्विषयकयत्नस्यावर्जनीयत्वात्, साध्यतया विधीयमानस्य विशेषणस्यैव स्वरक्षणार्थस्वव्यापारत्वाच्च स्वोक्तिविरोधः साङ्गप्रपत्तिविधायकशास्त्रविरोधश्च इत्यवधेयम् ॥

अत्र केचित् प्रत्यवतिष्ठन्ते -- प्रपत्तेः साधनत्वं सिद्धसाधनसहकारित्वं वा सिद्धोपायभूतेश्वरनिष्ठैकत्वसिद्धत्व परमचेतनत्व-परमकारुणिकत्व-सर्वशक्तत्व-निरपेक्षत्वादि स्वभावविशेषविरुद्धमिति । तच्च श्रुतिस्मृतिविरोधव्याप्तिशून्यत्वादि दोषसहस्रदूषितम् । किञ्च-- भक्तेः साधनत्वादौ अप्येष प्रसङ्गः समानः । इष्टापत्तिस्तु मोक्षसाधनीभूतोपासनपरतया चरमश्लोकीयधर्मशब्दव्याख्यानान्न घटिते**[?]** । अथ बलीवर्ददमनाय सैकतभारारोपणवत् अनुपायानामप्युपायत्वोपदेशे सति अर्जुनबुद्ध्या विषयीक्रियमाणा अधर्मा अपि धर्मशब्देन अनुद्यन्त इति चेत् परमधर्मतया प्रसिद्धानां कर्मयोगादीनां निवृत्तिधर्माणामपि अधर्मत्वे सुतरां प्रवृत्तिधर्माणाम् अधर्मत्वापत्त्या सकलशास्त्रवैयाकुलीति यत्किञ्चिदेतत् ॥

अथ भवतामप्युपासनस्येव प्रपदनस्यापि धर्मशब्दवाच्यत्वात् सर्वशब्दसङ्कोचभिया साधनत्ववेषेण त्याज्यत्वे स्वीकर्तव्ये सति प्रपदनस्य साधनत्वं सिद्धसाधनसहकारित्वं वा स्वीक्रियमाणं चरमश्लोकव्याख्यानविरुद्धमिति चेत् उच्यते-- अत्र किं साक्षात् साधनत्वबुद्धिपरित्यागः आहोस्वित् प्रसादनतावेषेणापि तत्परित्यागो विवक्षितः। आद्ये-- भक्तियोगादेरपि समानमेतत् । अन्त्ये सर्वशब्दसङ्कोचभिया सनातनधर्मस्य कृष्णस्यापि धर्मशब्दवाच्यतया तत्रापि साधनताबुद्धिपरित्यागप्रसङ्गः ॥

अथास्मिन् श्लोके विधीयमानं धर्ममपेक्ष्य भिन्नानां धर्माणामेव त्याज्यता अभ्युपगन्तव्या इति चेत्-- तदेतत् अत्रैव विधीयमाने शरणवरणेपि समानम् । तर्हि भक्तिप्रपत्त्योः साक्षात् साधनत्वासम्भवात् सिद्धोपायोपकारकता वाच्या । सा च --नोत्पादकतया तस्य निरुपाधिकतत्त्वत्वात् नापि वर्धकतया

, उपचयरहितत्वात् । नापि सहकारितया, सदा परिपूर्णसहजकारुण्यादिमत्त्वात्, नापि द्वारतया द्वारनिरपेक्षकार्योत्पादनसमर्थसत्यसङ्कल्पवत्त्वात् । अपि तु अनाद्यपचारपरम्परामूलसंसारहेतुभूतनिग्रहोपशमनद्वारा भक्तिप्रपत्त्यादिकमुपकरोतीति तत्त्वम ॥

तदेतत्प्रपदनमुपासनं वा फलान्तरापेक्षिणां ज्योतिष्टोमादिवत् भगवतः तत्तदनुगुणप्रीतिविशेषोत्पादनमुखेन फलप्रदं भवति । मोक्षापेक्षिणां तु शास्त्रनिग्रहसिद्धोपायसाध्य यावदात्मभाविपरिपूर्णकैङ्कर्यपर्यन्तं फलं प्रददातीति विवेकः । तस्मान्मुमुक्षोः सर्वानिष्टनिवृत्तिपूर्वकपरिपूर्णकैङ्कर्यपर्यन्ता सर्वापि फलपरम्परा सिद्धोपायसाध्या प्रसादनरूपसाध्योपायमूला चेति सर्वाण्यपि प्रमाणानि अनाकुलानि ॥

अत्र कश्चिदविधेयप्रपदनवादः । यथा-- शरणवरणेरागतः प्रवृत्तिसम्भवात् विधिरयुक्तः । यथा हि लोके कश्चित् स्वरक्षणासमर्थः सन्निहितं रक्षणसमर्थं स्वयमेव आश्रयति । तथा स्वस्वरूपं परस्वरूपं च सिद्धपरेण शास्त्रेन विजानीते, प्रवर्तते च स्वयमेवाश्रयणे इति । सोऽयमौचित्यमूलोतिवादः । लौकिकाश्रयणे प्रकारविज्ञानवत् अलौकिकाश्रयणेपि अनेन प्रकारेण समाश्रितमेतादृशमधिकारिणं स्वीकरोति भगवानिति विज्ञानमावश्यकम् । तच्च कर्तव्यपरशास्त्रैकनिदानम् ॥

यद्याश्रितं स्वामी संरक्षतीत्यानुमानिको निर्णयः । तर्ह्युपासनाविधायकशास्त्रमनर्थकं सर्वेषामाश्रयणे एव प्रवृत्तिसम्भवात् । उपासनप्रपदनयोः समर्थासमर्थाधिकारिकत्वं तु नानुमानेन शक्यमवगन्तुम्। किञ्च-- राजसेवावत् भगवत्सेवाया मालाकरणादिरूपायाः यथेच्छमनुष्ठाने प्रत्यवायापत्त्या तत्परिहाराय शास्त्रानुसरणवत् सदाचार्योपदेशसापेक्षमन्त्रविशेषादिपरिकरसहितप्रपत्तितत्फलयोः साध्यसाधनभावे अनुष्ठानप्रकारे च शास्त्रमनुसर्तव्यं लौकिकप्रपदनतत्प्रकारतत्फलविशेषदर्शिभिरिति प्रपत्त्यविधेयतावादो निर्मूल एव ॥

इत्थं यथाधिकारमुपायं विहितवत्यपि शास्त्रे उपासनादीनां स्वरूपविरुद्धत्वमभिदधते केचित्, सोऽपि प्रपत्तिप्रशंसार्थोतिवादः । तथा हि-- स्वरूपविरोधः किं नाशकत्वात् किमसम्भवात्, किं वानर्थावहत्वात् । नाद्यः- स्वरूपस्य नित्यत्वात्। न द्वितीयः भगवदायत्तस्य ज्ञानचिकीर्षाप्रयत्नाश्रयत्वरूपस्य कर्तृत्वस्य जीवात्मन्यभ्युपगमात् । न च तृतीयः -- निषिद्धकाम्यवद्बन्धकत्वाभावेन अनर्थानापत्तेः ॥

अथ ब्राह्मणोहं क्षत्रियोहं गृहस्थोहमित्याद्यभिमानमूलकवर्णाश्रमधर्मस्य तदङ्गिकोपासनादेश्च देहात्मविवेकवतो दुरनुष्ठानतया स्वरूपविरोध इति चेन्न --स्वरूपस्य ब्राह्मण्याद्यभावेपि प्राचीनकर्मविशेषाधीनब्राह्मण्यादिविशिष्टशरीरसम्बद्धत्वात् यावत्सम्बन्धं क्षुत्पिपासादिपरिहारोपयिककर्मणामिव वर्णाश्रमधर्माणां शक्त्यनुगुणानां परित्यागस्य अयुक्तत्वात् । किञ्च-- देहात्मविवेकवतामेव हि पारलौकिकधर्माधिकारः । स चाधिकारः न स्वरूपब्राह्मण्यादिभ्रमः । किं तु ब्राह्मण्यादिविशिष्टशरीरसम्बन्ध एव । अतः सर्वधर्मसाधारणस्य प्रकृत्यात्मविवेकस्य

उपासनविरोधप्रसञ्जनमपहास्यम्, अपहास्यं च इदमत्यन्तमुपासनस्याहङ्कारगर्भत्वारोपेण विरुद्धत्वोपपादनम् । यदपि कर्मोपार्जितकरणकलेबराद्युपाधिप्रयुक्तानुष्ठानतया भक्त्यादेः निरुपाधिकस्वरूपविरुद्धत्वाशङ्कनं, तत् स्वरूपविज्ञानस्य द्वयमन्त्रश्रवणादेश्च मनःप्रभृतिकरणसापेक्षतया प्रपदनेपि समानम् ॥

अथात्यन्तपरतन्त्रस्यात्यन्ताशक्तस्य स्वरक्षणार्थं कर्तव्योपायविधानमनुपपन्नं, ततश्च भक्तियोगादेः शेषत्वाननुरूपत्वात् पारतन्त्र्यविरुद्धत्वात् असम्भावितत्वमेवेति चेन्न --अनेकानर्थप्रसङ्गात् । तथा हि--जीवगतं कञ्चन व्याजविशेषम् अनपेक्ष**[?]**मोक्षप्रदाने अनादिमोक्षप्रसङ्गः । मोक्षोपायविधायकशास्त्रानर्थक्यप्रसङ्गः । यथाशास्त्रं भगवत्प्रीत्यैकफलककैङ्कर्यानुष्ठाने प्रपदनानुष्ठाने च स्वरूपविरोधबुद्ध्याऽनधिकारप्रसङ्गश्च । प्रपदनस्य साध्यता तु प्रागेव सुस्था । तस्मात् शेषत्वपारतन्त्र्यं च तत्तत्प्रदत्तमर्यादया तदभिमतानुष्ठानेन तदीयकैङ्कर्यलाभौपयिकमेव । नैव च विरुद्धम् ॥

नन्वनन्यार्हशेषभूतस्य परमैकान्तिनः देवतान्तरद्वारको वर्णाश्रमधर्मः तदङ्गिको भक्तियोगादिश्च ऐकान्त्यविरुद्ध इति चेन्मैवम्-- परमात्मविशेषणीभूतदेवतावाचकाग्नीन्द्रादिशब्दान् कांश्चिद्विशेषपर्यन्ततया कांश्चिच्च साक्षाद्भगवद्वाचकतया चानुसन्धाय फलान्तरं चाननुसन्धाय स्वधर्मानुष्ठानं नैकान्त्यं विरुणद्धीति भाष्यादिष्वेव व्यक्तमुक्तत्वात् ॥

यदपि शास्त्रप्ररोचनार्थोभिचारादिविधिरिव प्रपत्तिप्ररोचनार्थो भक्तिविधिरिति स्वार्थे तात्पर्यविरहात् स्वरूपविरुद्धमिति । तत्- अभिचारादेः तुच्छफलत्वात् भक्तेर्मोक्षफलत्वात् एकस्मिन्नधिकारिणि एकस्मै फलाय लघूपायप्ररोचकगुरूपायविधानायोगाच्चानुपपन्नम् । तस्मात् विहितत्वाविशेषात् यथाधिकारमुभयमपि परिग्राह्यम्, विरुद्धतर्कादिना आगमगम्यस्यैकस्य बाधने अपरस्यापि तुल्यन्यायेन बाधसम्भवात् सर्वाप्रामाण्यापातः॥

अथ च विहितत्वेपि आचार्यरुचिपरिगृहीतत्ववैधुर्यात् कैश्चित् परिगृहीतत्वेपि गवालम्भादिवत् युगान्तरविषयकत्वसम्भवाच्च विरोध इति । एतदप्यसारं--कलावपि शठारिनाथमुनिप्रभृतिपूर्वाचार्यपरिग्रहदर्शनात् । भगवद्भक्तेः समयनियन्त्रितत्वानभ्युपगमाच्च ॥

तस्मादुपासनादिकं विरोधान्तरविरहात् यथाशास्त्रम् आतुरस्यावगाहनादिकमिव अकिञ्चनस्य अधिकारविरुद्धमित्येव युक्तमभ्युपगन्तुम् । अत एव -- भक्त्यादौ शक्त्याद्यभावात् स्वतन्त्रोपायतया प्रपत्तिमवलम्बितवन्तं श्रुतिः स्मृतिः भगवच्छास्त्रं च भूयसा प्रस्तौति **[?]** अत एव च -प्रवृत्तिधर्मः श्रेयान् । तत्राप्यध्यात्मयोगः । तस्मादपि भगवद्योगः ब्रह्मविद्यापरपर्यायः । तत्रापि न्यासनिक्षेपादिशब्दशब्दितः प्रपदनाख्यो योगः सुकरत्वसकृत्कर्तव्यत्वशीघ्रफलप्रदत्वादिना श्रेष्ठतम इति सर्वशास्त्रसारांशः ॥

अथ परिकरविषयकव्यामोहपरिहारः -- अनालोचितविशेषलोकशरण्ये रिपूणामपि वत्सलतरे सकलकल्याणगुणार्णवे भगवति कर्तव्यं भरसमर्पणं प्रति आनुकूल्यसङ्कल्पः प्रातिकूल्यपरिहारश्च सम्भावितस्वभावौ, नत्वङ्गतया नियतस्वभावौ इति केचित्। तदेतदङ्गाङ्गीविभागविधायकसकलशास्त्रविरुद्धम् । स्वाभ्युपगतनियमस्वभावे महाविश्वासेऽतिप्रसक्तं च ।

यदपि चात्र केषाञ्चिन्मतम्--सर्वसाधारणशास्त्रार्थविश्वासव्यतिरेकेण अङ्गभूतः कश्चिन्महाविश्वासो नाम नास्तीति । तदपि अतिशयितविश्वासस्य अङ्गतया विधानात् विश्वासतारतम्यस्य लोकेपि सिद्धत्वाच्च परिहृतम् । मन्दविश्वासानां प्रपन्नाभासानामपि सङ्कल्पितसमयावधेः प्रागेव उपायपूर्तिसंपादनेन संरक्षति शरण्य इति शाण्डिल्यादिभिः संस्कृतम् । तस्मान्नियतस्वभावेन आनुकूल्यसङ्कल्पादिपञ्चकेनोपस्कृतं प्रपदनमित्यनाविलं परिकरस्वरूपम् ॥

अथ सामान्यतः शङ्कापरिहारः--भक्तेः प्रपत्तेर्वा सङ्कल्पभेदेन ऐश्वर्यमोक्षादिरूपविरुद्धफलसाधनत्वमनुपपन्नम्, न ह्यैकमेव बीजं वप्तुरभिसन्धिभेदेन विजातीयाङ्कुरजननसमर्थं दृष्टमिति काचित् शङ्का । सापीत्थं परिहार्या --अस्यार्थस्य प्रबलप्रमाणशास्त्रैकसमधिगम्यतया केवलन्यायस्य अत्र अनवतारः ।

धार्मिकमहोदारनरपतिसकाशात् विक्रीतरत्नलभ्यलाभापेक्षया उपहारबुद्धिसमर्पित तादृशरत्नलभ्यलाभेऽतिशयस्य दर्शनरूपो विपरीतोपि न्यायः अस्तीति ॥

अथ च आवृत्त्यनावृत्त्यादिना विषमस्वभावे उपासनप्रपदने कथमेकफलं साधयितुमर्हत इतीतरा काचिच्छङ्का । सापि--यथा देशभेदात् कालभेदाद्वा गुरुलघूपाययोः एकफलसाधनता, तथा अधिकारिभेदादपीति लौकिककृषिवाणिज्यादौ शास्त्रीये मानसवारुणस्नानादौ च दृष्टा इति विवेकतो विनिवार्यते ॥

तथा-- स्वतन्त्रप्रतिपत्तिरूपोपायैकरूप्यात् आप्तदृप्तभेदेन फलविलम्बाविलम्बानुपपत्तिशङ्कापि--संसारतापजनितनिर्वेदतारतम्यानुगुणसङ्कल्पतारतम्येन फलसमयतारतम्यमपि सनिबन्धनमेवेति समाहिता भवति । प्रपन्नेषु केषाञ्चित् नाथमुनिप्रभृतीनां भगवत्साक्षात्कारः केषाञ्चित्तदभावः इत्यत्र प्रपत्तिकालिकफलसङ्कल्पविशेषः प्रारब्धसुकृतविशेषो वा नियामक इत्यप्यवधेयम् ॥

अथापि केचित्--दृष्टार्थप्रपत्तौ क्वचित्फलाभावमवधार्य सकलफलसाधनसमर्थायां तस्यां अतिशङ्कन्ते । तेऽपि कर्मकर्तृसाधनवैगुण्यमूलः क्वचित्फलविरहनियम इति प्रतिबोधयितव्या भवन्ति । प्रकृते कर्मवैगुण्यं महाविश्वासादिमान्द्यम् । कर्तृवैगुण्यं पूर्वोक्ताधिकारन्यूनत्वम् । साधनवैगुण्यं यथाशास्त्रं प्रपत्त्यनुष्ठानमूलभूतसदुपदेशादिशून्यत्वम् । एतत्त्रिविधवैगुण्यमन्तरेण अनुष्ठितं दृष्टार्थमपि प्रपदनं फलाविनाभूतमेवेति ॥

अपरे पुनरित्थं मन्यन्ते-- सर्वशास्त्रप्रवर्तकैः व्यासादिभिः “ध्येयो नारायणस्सदा””हरिरेव सदा ध्येयः””स्मर्तव्यः सततं विष्णुः” इत्यादिभिः वचनैः मोक्षसाधनतया भक्तेरेव उपदिष्टत्वात् चरमश्लोकोऽपि”मामेव ये प्रपद्यन्ते” इत्यादिवत् अङ्गप्रपत्तिमेव विधत्तां न पुनः स्वतन्त्रां काञ्चिदिति । अत्र उच्यते--”शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः” इत्यादिभिः प्रमाणैः सिद्धायां सत्यां स्वतन्त्रप्रपत्तौ “ध्येयो नारायणः” इत्यादिकं वचनजातं अरोगस्य क्षीरपानमिवस्वयं प्रयोजनतया प्रपन्नेप्यन्वेतीति ॥

तस्मात् सकलफलसाधनतया भगवच्छास्त्रादिविहितं प्रपदनं भक्तियोगारम्भविरोधिपापनिबर्हणरूपोदाहरणविशेषपरतया अभाषिष्ट भगवान् भाष्यकारः । तस्मादेव च भाष्यग्रन्थस्य गद्यस्तुतेश्च अविरोध इत्यनवद्यम् ॥

## २५. प्रभावव्यवस्था

इत्थं सिद्धोपायविषयकः साध्योपायविषयकश्च व्यामोहः परिहृतः । अथ चैतादृशोपायविशेषनिष्ठप्रभावातिरेकान् अतिरेकबोधकप्रमाणविचारमूलाः काश्चिच्छङ्काः परिह्रियन्ते । तत्रादौ जातिः व्यवस्थाप्यते ॥

न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः । सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने ॥

इति भगवद्भक्तिरूपधर्मसद्भावाभ्यां उत्कर्षापकर्षनिर्देशात् भगवद्भक्ताः सर्वेप्येकजातीया इति केचिन्मन्यन्ते । तत्रोच्यते--भागवतब्राह्मणं भागवतशूद्रं च पृथक्पृथक् उद्दिश्य प्रवृत्तं तत्तदाचारनियामकं सर्वं शास्त्रं एकजातीयत्वे व्याकुप्येत् । सर्वेषां भागवतानां समत्वं बोधयच्च शास्त्रं परमपुरुषार्थसाम्यतात्पर्यकम् । क्वचिदुत्कृष्टकुललाभवचनमपि कुलशब्दजातिशब्दयोः भिन्नार्थकतया वैष्णवत्वोपाधिककुलपरम् । ततश्च भगवद्भक्तिविधुराः ब्राह्मणाः शूद्रवदनादरणीयाः । भगवद्भक्ताश्च शूद्रा अपि ब्राह्मणवदादरणीया इति शास्त्रतात्पर्यमभ्युपगन्तव्यम् । अन्यथा --

चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः ।

चण्डालाः प्रत्यवसिताः परिव्राजकतापसाः ॥

न तेन स्थविरो भवति येनास्य पलितं शिरः ।

बालोपि यः प्रजानाति तं देवाः स्थविरं विदुः ॥

इत्यादिभिः निन्दाप्रशंसापरवाक्यैः व्याकुप्येयुः। मर्यादाः सर्वा अपि ॥

भागवताग्रेसरो विदुरोपि स्वजात्यनुगुणमेव वृत्तमातस्थौ । सर्वज्ञा अपि वासुदेवादयः तस्मिन् शूद्रत्वमभ्युपयन्ति स्म । योगप्रभावात् देहन्यासं कुर्वतस्तस्य विदुरस्य धर्मराजानुष्ठितो

ब्रह्ममेधसंस्कारः तूष्णीं वा व्यक्तिविशेषनियतो वा इत्यभ्युपेयः । अन्यथा नियतिविशेषनिबन्धनेन पाण्डवानां दारसाधारण्येन सर्वोपि लोको व्याकुलस्यात् **[?]**। तस्मात् स्वजात्यनुगुणप्रक्रिययैव युक्तं भगवन्तमाराधयितुमिति ॥

विश्वामित्रपरशुरामादीनां तु वर्णव्यत्यासः चरुव्यत्यासादिनिदान इति आकरे स्पष्टः। शठकोपमुनिप्रभृतीनां वृत्तान्तविशेषश्चात्र न दृष्टान्तीभवितुमर्हत्यस्माकम् । तत्तद्वृत्तान्तपर्यालोचनायामपि नैव दृश्यते क्वापि स्वस्वजातिव्यतिक्रमः । सत्यपि एवमभ्युपगन्तव्यं पूर्वपूर्ववर्णालाभदशायां इतरवर्णसकाशात् भगवद्ज्ञानस्य अवश्यसम्पादनीयत्वमपि । मन्त्रादिकं परं ब्राह्मणसकाशादेव ग्रहीतव्यमिति प्रमाणप्रतिनियतम् ॥

तुलाधारधर्मव्याधयोपि धर्मजिज्ञासून् ब्राह्मणान् सम्पूज्य सन्मार्गमात्रमुपदिदिशुः । न तु स्वीचक्रुराचार्यकम् । अत एव भक्तेभ्योपि म्लेच्छादिभ्यः दानादानादिवचनं न कन्यागोचरमपि तु ज्ञानगोचरमिति व्याचक्रुः व्याख्यातारः । वैष्णवत्वेन पूज्यत्वं सर्वत्र सममिति निष्कर्षः ॥

एवं च सत्त्वादिगुणतारतम्यनिबन्धनं शारीरं ब्राह्मण्यादिकमेकम् । अन्यच्च शमदमादिलक्षणं मानसिकम् । तत्र शारीरगुणविशेषमूलाः जातिविशेषाः उत्पत्तिसिद्धाः यावदाश्रयभाविनः । मानसिकास्तु तादृशाः सर्वजातिसाधारणाः । प्रह्लादीनामाजन्मसिद्धाः । इतरेषां सदाचार्यसम्बन्धनिबन्धनाः । तत्र शारीरब्राह्मण्यादिगोचराणि कानिचिच्छास्त्राणि तन्मात्रप्रतिनियतानि । कानिचिच्च ब्राह्मण्यादिगोचराणि पुरुषार्थतदुपायार्हताप्रशंसापराणि सर्वसाधारणानि । अत्र शरीरेनोत्कृष्टाः मनसापकृष्टाश्चेत् आरूढपतिता इति महतीं निन्दामवाप्नुयुः । शरीरेणापकृष्टा अपि यदि गुणोत्तराः प्रशंसां परमामेवाप्नुयुः । तत्र शारीरो मानसो वा समुत्कर्षः गर्वहेतुश्चेत् आवहति महान्तमनर्थम् । उभयविधोप्यपकर्षः स्वानुसन्धानमुखेन निर्वेदमुत्पाद्य अकिञ्चनाधिकारे स्वतन्त्रप्रपदने परम्परतया यदि प्रयोजकः तर्हि परमं श्लाघापदं भवति ॥

इत्थं जातिव्यवस्थायां वर्णव्यवस्थायां च सत्यामपि भागवतत्वैकनिबन्धनपूज्यत्वादिप्रतिपत्तेः न कश्चित्प्रतिरोधः । तत्र भागवतेषु देवतान्तरस्पर्शरहिताः परमैकान्तिनः । तत्रापि विलम्बाक्षमाः भगवति न्यस्तभराः स्वयं प्रयोजनं कैङ्कर्यं कुर्वाणाः भागवताः षोडशवर्णसुवर्णसवर्णपारमिकान्त्यवन्त इति अन्यत्र प्रपञ्चः ॥ यत्तु भागवतमहिमविषये--

नारायणैकनिष्ठस्य या या वृत्तिस्तदर्चनम् ।

यो यो जल्पस्सस जपः तद्ध्यानं यन्निरक्षरम् ॥

तत्पादाम्बवतुलं तीर्थं तदुच्छिष्टं सुपावनम् ।

तदुक्तिमात्रं मन्त्राग्र्यं तत्स्पृष्टमखिलं शुचि ॥

इत्यादिकं वचनं, तत्प्रमाणं भवदपि प्रवृत्तिशब्दः न निषिद्धवृत्तिपरः । किन्तु देशकालादिवैषम्यनिमित्तकापत्कालीनानन्तरवृत्तिपरः । चेष्टेति पाठेपि

स्वभावार्थशास्त्रप्राप्तनिमेषोन्मेषादिचेष्टापरः । न तु निषिद्धचेष्टापरः । यत्करोषि यदश्नासीत्यादिश्लोकस्यापि अत्रैव तात्पर्यम् । एवं जल्पशब्दोपि न प्रतिषिद्धवृथाजल्पपरः । बाह्यकुदृष्टिविजिगीषुकथापरो वा । निरीक्षणपदमपि न निषिद्धनिरीक्षणपरम्, किन्तु शास्त्रदृष्टिप्राप्तनिरीक्षणपरम् ॥

पादाम्बुपदम् न तु यादृशतादृशतोयपरं, किन्तु भागवतपादोदकग्रहणदशायां तस्य नारायणैकनिष्ठत्वे गुणाधिक्यप्रदर्शनपरम् । उच्छिष्टपदमपि पुनरुपनयनादिप्रकरणेषु पानवतया शास्त्रप्राप्तस्य उच्छिष्टविशेषस्य गुणविशेषं प्रतिपादयति । । उक्तिपदं तु तदुपदिष्टतत्त्वहितविषयकवाक्यजातस्य सदानुसन्धेयतामवगमयति । एवं व्यवस्थानादरे स्पृश्यास्पृश्य-भक्ष्याभक्ष्य-उपादेयानुपादेयादिव्यवस्थापनपरस्य सर्वस्यापि शास्त्रस्य समुच्छेदप्रसङ्गः॥

ततश्च वेदवैदिकशास्त्रोक्तनियमानां स्वरूपेण परित्यागस्तामसः । कुटुम्बभरणासमर्थतया तुरीयाश्रमपरिग्रहाय गार्हस्थ्यपरित्याग इव आलस्यादिना सर्वकर्मपरित्यागः राजसः । भगवानेव स्वकीयेनात्मना स्वकीयैश्चोपकरणैः स्वाराधनैकप्रयोजनाय स्वशेषभूतमिदं कर्म कारयतीत्यनुसन्धानपूर्वकं स्वाधिकारानुगुणस्य कर्मणः करणं सात्त्विकत्यागः । एवमनुष्ठानजनितभगवत्प्रसादस्य फलतया मोक्षमप्यपेक्षमाणस्य प्रागनुष्ठितप्रपदनजनितभगवत्प्रसादेनैव सिद्धो मोक्ष इत्यनुसन्दधानस्य कर्मानुष्ठानं मुक्तकैङ्कर्यवत् अरोगक्षीरसेवनवच्च सात्त्विकत्यागपराकाष्ठा ॥

सर्वधर्मान् परित्यज्य इत्यत्र भाष्यकारीयप्रथमयोजनायां न कर्मस्वरूपत्यागो विधीयते । अपि तु निरुक्तबुद्धिविशेषरूपः सात्त्विकत्यागः । स च बुद्दिविशेषः स्वतन्त्रप्रपत्तिनिष्ठस्य प्रपत्त्यनुष्ठानकाले चोपादेयः । द्वितीय योजनायाम् उपायान्तरानन्वयोनुगम्यते । सोप्यनन्वयः प्रपत्तेः प्राग्दैवादागतः अधिकारकोटिप्रविष्टतयाऽनूद्यते । पश्चात्तु प्रपत्तिनैरपेक्ष्यबोधकशास्त्रेण विधीयते । एवमेकस्य परित्यज्येति पदस्य अनुवादित्वं विधित्वं च व्यवस्थितपक्षद्वयाभिप्रायेण स नोपपद्यते । ततश्च प्रपत्तेः धर्मान्तरनैरपेक्ष्येपि स्वतन्त्राधिकारप्राप्तनित्यनैमित्तिकधर्मपरित्यागः भगवदाज्ञां रुणद्धीत्येव निष्कर्षः ॥

यद्यपि श्रीमति गीताभाष्ये स्वतन्त्रप्रपत्तिपरतया चरमः श्लोको न हि व्याख्यातः । तथापि प्रपत्तेः सकलफलसाधनरूपतां प्रकृतभक्तियोगलक्षणफलविशेषे प्रदर्शयितुं प्रवृत्तायां द्वितीययोजनायां प्रपत्तेः दुष्करभक्तियोगपर्यन्तोपायान्तरस्थानाभिषेकोप्यभिमतोऽर्थः । तथा च--

“ सुदुष्करेण शोचेद्यो येन येनेष्टहेतुना ।

स स तस्याहमेवेति चरमश्लोकसङ्ग्रहः॥ इति सारसङ्ग्रहः ॥

यत्त्विदं भारतवचनम्-- त्यज धर्ममधर्मं च त्यज सत्यानृते अपि ।

उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥ इति ।

तत्र प्रथमः पादः काम्यनिषिद्धत्यागपरः । द्वितीयः कैवल्यैश्वर्याभिसन्धित्यागपरः । तृतीयः आदरद्योतनाय अनुवादः । तुरीयस्तु त्यागेपि कर्तृत्वं परायत्तमित्यनुसन्धानपरः ॥ इति ॥

अथ-- तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ।

प्रवृत्तिं च निवृत्तिं च श्रोतव्यं श्रुतमेव वा ।

मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।

याहि सर्वात्मभावेन यास्यसि ह्यकुतोभयम् ॥ इति श्री भागवते प्रतिचोदनाविषयीभूतनिषिद्धनिवृत्तेः त्यागविधानात् तादृशस्य च त्यागस्य निषिद्धानुष्ठानरूपस्य वैधत्वावगतेः प्रपन्ने बुद्धिपूर्वस्यापि उत्तराघस्य आश्लेष इति केचिदभिप्रयन्ति ॥

तदेतत् पापस्यावश्यानुष्ठेयता प्रसक्त्या अत्यन्तमपहास्यम् । पूर्वानुष्ठान-स्वानुष्ठान-स्वेतरानुष्ठान-स्ववचन-सर्ववचनविरुद्धं च । तद्वचनाभिप्रायस्तु-चोदितप्रवृतिविषयीभूतेषु प्रतिचोदितनिवृत्तिविषयीभूतेषु आनुकूल्यसङ्कल्पाद्यतिरिक्तः कश्चिदपि स्वतन्त्रप्रपत्त्यङ्गतया नोपादेय इति । अतो वर्णाश्रमजातिगोत्रप्रवरचरणकुलदेशकालावस्थानुगुणसमयानुरोधेनैव सर्वैः भक्तैः भागवतैश्च वर्तितव्यमिति सिद्धम् ॥

## २६. प्रभावरक्षा

इत्थं उपायस्य प्रभावो व्यवस्थापितः । अथ एतत्प्रभावविषयकप्रमादाः परिह्रियन्ते -- विद्यान्तरन्यायेन उत्तरपूर्वाघाश्लेषविनाशः अधिकारिसमवेतात्पर्यानुगुण्येन प्रारब्धविनाशोपि मा शुच इत्यस्याभिप्राय इति सिद्धान्तः ।

अत्रेयमाशङ्का-- एवं सतीहोपायनिष्ठः प्रारब्धकर्मविशेषफलीभूतं कर्म च नोपलभेत । एवमप्राप्तापि**[?}** प्रारब्धफलनिवृत्तिः पङ्क्तिपावनत्वादिवत् हितैषिणा भगवता स्वयमेव कुतो न दीयेत ॥ इति ।

इदमत्रोत्तरम् -- यद्यप्यधिकारी स्वाभिलाषानुगुण्येन कञ्चित्कालमैहिकभोगान् प्रारब्धवशादनुभवति । यदि च तान् दुःखप्रसङ्गरहितानेवानुभवेत् न तर्ह्यत्र विरच्येत् । न पुष्येच्च भगवदनुभवयोग्यता । तस्मात् कठिनचेतसां शिक्षालक्षणानुग्रहविशेषोऽत्र प्रारब्धमूलकदुःखानुभव इत्यनुसन्धेयः ॥

तत्र नियतायुषां तावत्येव काले समुद्वेगजननार्थम्, अनियतायुषां च आयुष्कामीयेष्ट्यादिषुनिवृत्तिजननार्थं च अत्र दुःखानुभवः हितप्रवर्तकोपाध्याय इति पूर्वाचार्याणामभिसन्धिः । यथा प्राणार्थिनः काकस्य प्राणदानेन सफलेपि प्रपदने नेत्रशातनं पुनरपराधपरिहाराय दुष्प्रकृतितायाः शिक्षणमनुग्रहलक्षणमेव ।

सकृत्कर्तव्यस्यापि प्रपदनस्य श्रूयमाणः प्रभावः शास्त्रोपप्लवगन्धरहितविषये असङ्कोचेनैव अभ्युपेयः यथा क्षणकालकृतपापविशेषस्य भूतसम्प्लवाधिको नरकपातः वाचनिकोभ्युपगतः । तस्मात् मातापितृहन्तारमपि प्रपन्नं भगवान् रक्षत्यादिकं वचनजातं पूर्वाघविषयकत्वे नैवानुपपन्नम् । उत्तराघविषयकत्वे तु निस्तारक्रमः पूर्वोक्त एव ॥

तस्मादस्मत्सिद्धान्तबद्धादराः मुमुक्षवः स्वोचितोपायप्रविष्टा भागवताश्च सन्तोप्यनुपशान्तार्थाद्यनुषङ्गाश्चेत् असम्भाष्या इति केचन वैराग्यमात्रप्रधानाः प्राहुः । अमार्गप्रविष्टविषये वक्तव्यानि वचनानि सन्मार्ग एव स्खलतां विषये नैव चिन्तनीयानि । एकान्तेन भागवताः यादृशतादृशाचारा अपि अनुवृत्तदोषा अपि उपक्लेशपरिभूता अपि साधुत्वेन बहुमन्तव्या एव । नैव चापचरणीया इति सकलशास्त्रसारार्थः । यतः नारकलोकस्य अङ्कुरक्षेत्रसदृशे संसारमण्डले स्वाधिकारानुरूपेषु मुक्तिमार्गद्वारभूतेषु कर्मयोगादिपर्वसु प्रविष्टानामपि विषये ऽवमतिः भागवतापचार एव । किं बहुना --गोमुखव्याघ्रन्यायेन रावणभिक्षुन्यायेन च भागवतवेषधारिणोपि यावत्तत्त्वविज्ञानं भगवद्रूपनामभ्यामादर्तव्या एव । एतादृशशैलूषवृत्तिविषयकं न लिङ्गं धर्मकारणमित्यादिकं वचनम् ॥

यथा तथा वापि भगवन्नामसङ्कीर्तनस्य प्रभावातिशयं प्रतिपादयतो वचननिचयस्य श्रद्धाविकलमपि अभिज्ञानविधुरमपि बुद्धिपूर्वानुच्चरितमपि साङ्केत्यपारिहार्याद्यभिसन्ध्यन्तरसंवलितमपि प्रयोजनान्तरसङ्गसहितमपि दोषान्तरावियुक्तमपि नामसङ्कीर्तनं भगवत्प्रद्वेषरहितानां पावनतमम् । न तु भगवत्परिवादान्तर्नीतनामकीर्तनमपि पावनतममित्यभिप्रायः । गोपिकाकंसचैद्यादीनामिव ययाकयापि विधया भगवत्सम्बन्धःपावनतम इत्याद्यर्थकं वचनजातमपि भवान्तरसंसिद्धाधिकारिविशेषविषयकमिति पूर्वापरवृत्तान्तप्रतिनियतम् । तदभिधानं तु प्रद्वेषाभावप्रोचनाय न तु तथानुष्ठानायेति तत्त्वम् ।

एवं भगवत्क्षेत्रे शरीरविश्लेषादेः मोक्षोपयिकताकथनमपि पश्वादिवद्वा प्रातिकूल्यरहितानां मोक्षोपकारकतापरम् । अन्यथा भगवद्विग्रहाद्यपहाराय प्रवृत्तानां तत्र विशिष्टशरीराणामपि मोक्षप्रसङ्गः । तस्मादीश्वरप्रातिकूल्यशेषतया उपादीयमानं किञ्चिदपि क्षेत्रवासनामकीर्तनादिकं नोपकारकं किन्तु नितरां बाधकम् , आनुकूल्यशेषतया उपादीयमानं किञ्चिदपि विकलमपि क्षत्रबन्ध्वादीनामिव सकलं च सत् सर्वमनिष्टं शमयति, प्रापयति च सर्वमपीष्टमिति शास्त्रसारार्थः ।

तस्मात् स्वसङ्कल्पनियतेन केनापि व्याजेन मुक्तैश्वर्यमनुगृहीतुं परिगृहीतानामाश्रितानां दोषानपाकरोति सर्वेश्वरः इत्यभिसन्धाय दोषदर्शनेन अनादरमकुर्वतां गुणदर्शनेन मरुभूमौ

शीतलमधुरजलदर्शनेनेव हृष्यतां भागवतसङ्गत्या अत्र आत्मानं कृतार्थयतां श्रीपतिपरिगृहीतानामस्माकं कदाचित् क्वचिदपि न हानिरिति व्यवस्यतां परमपदसाम्राज्याय पट्टाभिषिक्ता वयमित्यनुसन्धाय करण त्रयेणापि साम्प्रतं कल्याणमेवाचरितुमिति निष्कर्षः ॥

इति श्रीमद्रहस्यत्रयसारसङ्ग्रहे

द्वितीयः परिच्छेदः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# तृतीयः परिच्छेदः

## २७. मूलमन्त्राधिकारः

अथ रहस्यत्रयस्य पदवाक्ययोजनाक्रमो निरूप्यते -- तत्र प्रथमं रहस्यं परशेषतैकरसस्वरूपादीन् प्रकाश्य समस्तप्रतिबन्धकनिवृत्तिपूर्वकपरमपुरुषार्थरुचिश्रद्धाजननमुखेन उपायाधिकारं पूरयतीति सत्तां च लम्भयतीति च धारकमित्युच्यते ॥

द्वितीयं त्वित्थं पूर्णाधिकारस्य फलापेक्षापूर्वकोपायानुष्ठानप्रकारं सकृदुच्चरितं सद्विशदयतीति सदानुसन्धानेन कृतार्थयतीति च भोग्यमित्युच्यते ।

तृतीयं पुनः एतादृशमुपायविशेषं विदधतो उपायौपयिकज्ञानविशेषोपचयहेतुतया पोषकं चेत्यभिधीयते । तत्र सर्वत्र सर्वस्याप्यर्थस्य शब्दतोऽर्थतो वा वेदितव्यत्वेपि एकैकस्यैकैकत्र तात्पर्यमिति व्यवस्थितिः ॥

मूलमन्त्रे प्रथमपदे प्रथमाक्षरेण संक्षिप्तं शरण्यस्वरूपं द्वितीयतृतीयपदाभ्यां प्रतीतमुपायमुपेयं च क्रमशः प्रकाशयति द्वयम् । तत्रोत्तमपुरुषेण विवक्षितं चोपायान्तरनैरपेक्ष्यं नमश्शब्दसंक्षिप्तं विरोधिनिवृत्त्यंशं च विशदयति चरमश्लोकः ॥

प्रथमरहस्ये प्रणवः आत्मसमर्पण पर इति केचिदाहुः । स्वरूपप्रतिपादनमात्रपर इति केचित् । तत्राद्येनाकारेण सर्ववाचकमूलेन सर्ववाच्यमूलनारायणवाचकेन कारणत्वं तदनुगुणगुणयोगश्च विवक्षितः । तथा रक्षणप्रीणनादि धातुविशेषनिष्पन्नत्वेन निरुपाधिकरक्षकत्वादिकं विवक्षितम् । स्वरूपनिरूपकतया देवतान्तरव्यावर्तकतया उपयोगविशेषवत्तया च लक्ष्मीवैशिष्ट्यमप्यर्थतो विवक्षितम् । उकारस्य लक्ष्मीवाचकत्वे शाब्दमेव ॥

सोऽयमकारः प्रथमपक्षे सम्प्रदानार्थकलुप्तचतुर्थ्येकवचनान्तः । प्रणवस्य समर्पणकरणमन्त्रत्वेन विधानात् तस्य च अनुष्ठेयार्थप्रकाशकत्वावश्यकत्वात् । समर्पणीयस्य तृतीयाक्षरेण प्रथमान्तेन प्रतिपन्नत्वात् उद्देशस्य प्रकृतिमात्रसिद्धत्वात् तदनुगुणविभक्तेः स्वीकरणीयत्वात् ।

मनज्ञाने मनपरिमाणे इत्यादिधातुविशेषनिष्पन्नत्वेन मकारः ज्ञानस्वरूप ज्ञानगुणकाणुपरिमाणजीवविशेषरूपानुसन्धातृविशेषकोपि सर्वशेषोपलक्षकः । जीवसामान्यवाचकोपि विशेषपर्यवसायीति वा अस्मच्छब्दसमानार्थक इति वाऽत्र प्रभेदाः । समर्पित इति पदमध्याहार्यम् । तथा च आकारवाच्यस्वभावविशिष्टाय अहं समर्पित इत्युपायपरवाक्यार्थः ॥

द्वितीयपक्षे -- अकारः तादर्थ्यार्थकलुप्तचतुर्थ्येकवचनान्तः । उकारस्त्ववधारणार्थकः । अवधारणस्य अन्ययोगव्यवच्छेदरूपत्वे अनन्यशेषत्वसिद्धिः । अयोगव्यवच्छेदरूपत्वे पृथक्सिद्ध्यनर्हत्वसिद्धिः । तथा च-- अकारवाच्यस्वभावविशिष्टाय अनन्यार्हनिरुपाधिकशेषभूतोऽहमिति स्वरूपपरवाक्यार्थः ॥

एवं नमः शब्दस्थः मकारः प्रणवस्थमकार इव प्रत्यगात्मवाचकः षष्ठीबिभक्त्यन्तः । विभक्त्यर्थस्तु प्रकृतविवक्षितशेषत्वलक्षणः सम्बन्धविशेषः । नकारो निषेधार्तकः। निषेधानुयोगी च अनुषक्तप्रणवमकारार्थः । तथा च --स्वनिरूपितशेषत्वाभानवानहमिति वाक्यार्थः । गुणानां प्रधानानुवर्तितया स्वव्यतिरिक्तसमस्तवस्तुनिरूपितनिरुपाधिकस्वामित्वाभानवानिति फलितार्थः । इदमेव विशेषनिर्देशप्रयोजनम् । यद्वा -- अहम् न ममेति स्वस्य स्वनिर्वाहकत्वं व्यवच्छिद्यते । निर्वाह्य निर्वाहकभावरूपः सम्बन्धः षष्ट्यर्थः । निर्वाहकत्वमेव वा स्वातन्त्र्यम् । यद्वा -- स्वातन्त्र्यमिति पदमध्याहार्यम् । न मकारानुषङ्गः । न मम स्वातन्त्र्यमित्यर्थः । तच्च निरपेक्षकर्तृत्वार्हत्वम् । तथा च -- श्रीमत एव निरुपाधिकस्वाम्यं स्वातन्त्र्यं च । जीवस्य पारार्थ्यं पारतन्त्र्यं चेति तार**[?]**नमसोः सारार्थः ॥

तथा-- नमश्शब्दस्य अहिर्बुध्न्यसंहितारीत्या स्थूलसूक्ष्मपररूपास्त्रयो विद्यन्ते । तत्र स्थूलोऽर्थः सपरिकरात्मनिक्षेपः । सूक्ष्मार्थोऽहङ्कारममकारनिषेधः । परार्थस्तु-- नकारः गत्यर्थकः । मकारः प्रधानार्थकः, विसर्गः पुरुषोत्तमार्थकः । तथा च--परमात्मैव मुख्योपायः स्वप्राप्तय इति ॥

अथ नारायण पदार्थः-- नरस्य भगवतः इमे नाराः सर्वाणि तत्त्वानि । जन्य जनकभावः संसर्गः । तेन स्वव्यतिरिक्तसर्ववस्तुनिरूपितसर्वविधकारणत्वसिद्धिः । ईयते इत्ययनमिति कर्मव्युत्पत्त्या व्याप्यमित्यर्थः । नाराः अयनं यस्येति बहुव्रीहिणा सर्वव्यापकत्वसिद्धिः । तदनुगुणनिरतिशयसूक्ष्मत्वादिसिद्धिश्च । ईयते अस्मिन्नित्यधिकरणव्युत्पत्त्या नाराणामयनमिति तत्पुरुषेण सर्वलयाधिकरणविवक्षया च पूर्वोक्तसर्वसिद्धिः ॥

अथवा रीयते इति रः क्षयिष्णुः विकारी अचिदितियावत् । नरः नगनैकादिशब्दवत् न शब्देन समासेन तद्विलक्षणः । चिदित्यर्थः । तेषां समूहः नाराः तेषामयनमिति तत्पुरुषपक्षे ईयते अनेनेतिकरणव्युत्पत्त्या सर्वोपायत्वम्, ईयते असाविति कर्मव्युत्पत्त्या सर्वोपेयत्वं ईयते अस्मिन्नित्यधिकरणव्युत्पत्त्या सर्वाधारत्वं सिद्ध्यति । निरुक्तोपायत्वोपेयत्वोपयुक्तं परत्वं सौलभ्यं च अर्थात् सिद्ध्यतः । तथा -- बहुव्रीहिणा अन्तर्व्याप्तिः तत्पुरुषेण बहिर्व्याप्तिश्च सिद्ध्यतः ॥

ततश्चतुर्थीतादर्थ्यसम्प्रदानयोग्योपपदभेदेन यथार्हं ग्राह्या । तथा च -- रक्षकत्वं स्वामित्वम् उपायत्वं नियन्तृत्वम् उपेयत्वम् इत्येते भगवदाकाराः क्रमशः अकारचतुर्थी नमोनारायणचतुर्थी बोध्याः । तथा-- अनन्यार्हशेषत्व-अनन्योपायत्व-अनन्योपेयत्वानि जीवात्माकाराः प्रधानाः क्रमात् पदत्रयबोध्या इति विशेषः ॥

अत्र निष्कृष्टयोजनानि शेषास्तु-- मन्त्रोयमेकमेव वाक्यं वाक्यद्वयं वाक्त्यत्रयं चेति सम्प्रदायप्रभेदाः । तत्रैकवाक्यत्वपक्षे उपायपरं , उपेयपरं चेति योजनाद्वयम् । द्विवाक्यत्वपक्षे -- स्वरूपपरं, उपायपरम् उपेयपरम् चेति योजनात्रयम् । त्रिवाक्यत्वपक्षे प्रथमवाक्यद्वयम् स्वरूपपरम्, अनन्तरमेकं वाक्यम् उपेयपरमिति स्वरूपोपेयपर इत्येको योजनाविशेषः । । प्रथममेकं वाक्यं स्वरूपपरम् । अनन्तरवाक्यद्वयं उपेयपरमिति तादृश एव द्वितीयः । प्रथमवाक्यं स्वरूपपरं अनन्तरद्वयम् उपायपरमिति स्वरूपोपायपर इति तृतीयः । प्रथममुपायपरम्, अनन्तरद्वयमुपेयपरमिति उपायोपेयपरस्तुरीयः । क्रमेण वाक्यत्रयं स्वरूपोपायोपेयपरमिति पञ्चमः । आहत्य दशविधो योजनाविशेषः । तदर्थास्तु--

१. प्रथमः --प्रणवप्रतिपाद्यस्वभावविशिष्टनारायणोद्देश्यकमात्मरक्षाभरसमर्पणं करोमीति ।

२. द्वितीयः-- प्रणवप्रतिपाद्यस्वभावविशिष्टनारायणोद्देश्यकां शेषवृत्तिं करवाणीति ।

३. तृतीयः--अकारनारायणशब्दवाच्यसर्वरक्षकत्वसर्वाधारत्वादिविशिष्टायैव अहं निरुपाधिकानन्यार्हशेषभूतः । न मह्यं न वा किञ्चिदपि मह्यम् । न च मम निरपेक्षं स्वातन्त्र्यमिति ।

४. तुरीयः--निरुपाधिकहवीरूपोयमात्मा अकारवाच्यनारायणायैव भरतया समर्पितः । न ममेति । अत्र समर्पित इति पदाध्याहारः ।

५.पञ्चमः-- अहमकारवाच्यनारायणायैव स्याम् नममस्यामितीष्टप्राप्त्यनिष्टनिवृत्तिप्रार्थनारूपः । अत्र स्यामिति पदाध्याहारः ।

६. षष्ठः--अकारार्थायैवाहं शेषः । न मह्यम् । नारायणाय भवेयमिति । अत्र भवेयमिति पदाध्याहारः । तदर्थस्तु--नारायणोद्देश्यकं सर्वदेशदशाकालोचितसर्वविधकैङ्कर्यं करवाणीति ।

७. सप्तमः-- अकारार्थायैवाहं शेषः। न मम स्यां नारायणायैव स्यामित्यनिष्टनिवृत्तीष्टप्राप्ति

रूपोपेयप्रार्थनारूपः ।

८. अष्टमः-- अकारार्थायैवाहं शेषः। न मम स्यां नारायणायैव स्यामित्यनिष्टनिवृत्तीष्टप्राप्ति-

प्रार्थनोपलक्षितात्मनिवेदनपरः । अयनशब्दे करणव्युत्पत्त्या भगवतः उपायत्वस्य सिद्धत्वात् ।

९. नवमः--अकारार्थायैव मकारार्थोऽहं भरत्वेन समर्पितः । न मम स्याम्, नारायणस्यैव स्याम् । इति ।

१०. दशमः -- अकारार्थायैवाहं शेषः । तस्मै आत्मरक्षाभरसमर्पणं करोमि । नारायणाय भवेयम् । सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्यं करवाणीत्यर्थः ।

इत्थं स्वरूपोपायोपेयेषु एकस्य द्वयोर्वा शाब्दत्वेपि इतरस्यार्थत्वमवगन्तव्यम् । सर्वेषां शाब्दत्वं चरमयोजनायां सिद्ध्यतीति इयमेव स्वरसतमा योजना \ इति सर्वं चतुरश्रम् ॥

इति मूलमन्त्राधिकारः

## २८. द्वयाधिकारः

प्रथमरहस्ये मध्यमपदेन शब्दतो अर्थतो वा विहितमुपायविशेषं तृतीयपदेनाभिहितं पुरुषार्थविशेषं च विशदं प्रकाशयति द्वितीयं रहस्यम् । कठवल्ल्यां श्रीप्रश्नसंहितादौ च आम्नानान्मन्त्रोऽयं श्रुतिमूलकस्तान्त्रिकः । पूर्वाचार्यवाक्यमेतदिति केषाञ्चित्प्रवादोऽपि आप्तोपदिष्टमित्यादरार्थः परमाचार्येणेश्वरेण उपदिष्टमिति परिग्रहातिशयार्थो वानुसन्धेयः ॥

अस्य च मन्त्रस्योपायोपेयरूपस्य वरणसमर्पणरूपस्य वाऽर्थद्वयस्य प्रतिपादकतया द्वयमिति व्यवहारः । तस्मादुपायोपेयान्तरस्पर्शरहितः अत्र मुख्योधिकारी । तादृशस्य महाविश्वासवतः समुदायज्ञानपूर्वकं सकृदस्योच्चारणमेव उत्तारकमिति शास्त्रसम्प्रदायविदां मतम् । यथाकथञ्चित् भगवन्नामसङ्कीर्तनप्रभावपरवचनपरामर्शेन कैमुतिकन्यायसिद्धः शास्त्रसिद्धोपि च शरण्यशरणागतितत्फलविशेषान् कात्स्न्र्येन प्रतिपादयतो मन्त्रविशेषस्य प्रभावातिशयः ॥

द्वयस्यास्यार्थमेव सदाचार्यसम्प्रदायसिद्धं विवृतवान्पृथुगद्येन भगवान् भाष्यकारः । तस्माद्गद्योक्ताः सर्वेप्यर्था अत्र विवक्षिताः । गद्ये चात्र द्वयमित्यनन्तरं व्याख्यातप्रायमितिपदमध्याहृत्य व्याख्यानव्याख्येयभावः सङ्गमनीयः । अनन्तरभागस्तु उत्तरखण्डविवक्षितार्थपर इति भाव्यः । विभाव्यश्च -- एवमर्थानुसन्धानेन सह सदा द्वयं वक्तेति योजनयापि मूलमूलिभावः । प्रपन्नस्य परभक्त्यादिमूलककैङ्कर्यलाभोक्तिस्तु देहावसानकालिकहार्दानुग्रहमूलकफलदशातत्परेति नानुपपन्नमत्र किञ्चिदपि ॥

तत्रादौ श्रीमन्नारायणपदेन शरण्यं परतत्त्वं प्रकाश्यते । विशिष्टस्य शरण्यतामवधारयति श्रीमत्पदम् । श्रीशब्दनिर्वचनं तु -- श्रीञ् सेवायामितिधातोः कर्मणि कर्तरि च श्रीयते श्रयते इति वा निष्पद्यते । तत्र-- स्वोज्जीवनार्थिभिराश्रीयते श्रयते च सर्वेश्वरं स्वाश्रितानुज्जीवयितुमित्यर्थविवक्षायां वात्सल्यातिशयनिबन्धनं पुरुषकारत्वमुक्तं भवति । सर्वैः सेव्यते स्वयं च भगवन्तं सेवते इत्यर्थविवक्षायां सर्वाधारत्वं सर्वव्यापकत्वं चोक्तं भवति ॥

एवं -- श्रुश्रवणे इति धातोः ण्यन्तादण्यन्ताच्च शृणोति श्रावयतीति श्रीरिति निष्पद्यते । तत्राश्रितानामार्तध्वनिं शृणोति श्रावयति च भगवन्तमित्यर्थविवक्षायां पुरुषकारकृत्यमुक्तं भवति । तथा-- शरणागतसंरक्षणलक्षणं धर्मं भगवतः सकाशात् श्रुत्वा श्रावयति समयविशेषे च भगवन्तमित्यर्थविवक्षायां श्रियोतिशयतमानृशंस्यमुक्तं भवति । तथा भगवतः सकाशात् लोकहितं श्रुत्वा शत्रूणामपि हितं श्रावयतीत्यर्थविवक्षायां लोकानुग्रहैकस्वभावत्वमुक्तं भवति ॥

एवं-- शृहिंसायामितिधातोः शृणातीति श्रीरिति निष्पत्तौ आश्रितानामुपायविरोधिनः प्राप्तिविरोधिनश्च समस्तस्यापि पापस्य निवर्तकत्वमुक्तं भवति ॥ एवं-- श्रीॅन् पाके इति धातोः श्रीणातीति श्रीरिति निष्पत्तौ आश्रितानां कैङ्कर्यपर्यन्तगुणपरिपाकं जनयतीत्युक्तं भवति । एतेष्वर्थेषु उपायत्वोपयुक्ताः पूर्वखण्डे प्राप्यत्वोपयुक्तास्तूत्तरखण्डे चानुसन्धेयाः ।

सामान्यतः श्रीमानित्युक्तावपि श्रुतिवशात् श्रियो जगन्मातुः पतिरित्यर्थविवक्षया पत्न्याः पारार्थ्यं पत्युः परत्वं सौलभ्यं च द्योत्यते । नित्ययोगविवक्षया तु --फलदशायामुपायदशायां च श्रियः अविनाभावः प्रतीयते ॥

इत्थमपेक्षितं श्रियः पुरुषकारत्वमप्यधिकयति नारायणपदप्रतीतो गुणगणः । तत्र -- वात्सल्य-स्वामित्व-सौशील्य-सौलभ्य-सर्वज्ञत्व-सर्वशक्तत्व-परमकारुणिकत्व-स्थिरत्व-परिपूर्णत्व-परमोदारत्वप्रभृतयः उपायत्वोपयुक्ताः प्राधान्येन अनुसन्धेयाः । उपेयत्वोपयुक्ताः शेषत्वनिरतिशयभोग्यत्वादयस्तु उत्तरखण्डे अनुसन्धेयाः ॥

श्रीमन्नारायणचरणावित्यत्र पदत्रयपक्षे तवेति पदमध्याहार्यम् । चरणाविति दिव्यमङ्गलविग्रहमुपलक्षयति । तेन नित्यदिव्यमङ्गलविग्रहयोगः प्रधानतमो गुणोऽनुसन्धेयः । अनुसंहितश्च भगवतो दिव्यात्मस्वरूपे प्रागुपदर्शिते गुणगणे च विशदप्रकाशविरहिणां ज्ञानसङ्कोचं विनिवारयति । तादृशप्रकाशशालिनोपि केचिदाचार्याः दिव्यमङ्गलविग्रहभोग्यतातिशयेन भगवद्विषये स्वात्मानं देहात्मवादिनमाहुः । तस्मात् मुमुक्षूपयुक्तशुभत्वाश्रययुक्तं दिव्यमङ्गलविग्रहमुपादेयतमं विदुः । अत्र चित्तालम्बनसौकर्यातिशयेन दासत्वौचित्यातिशयेन कृपोत्तम्भकत्वातिशयेन भोग्यत्वातिशयेन च चरणावेवाश्रयणीयौ । श्रीविशिष्टस्य शरण्यताया विशेष्यस्य सर्वशक्तत्वविरोधादिप्रसङ्गस्तु विशेषणस्य पुरुषकारतायामपि तुल्यः। अत्र ईश्वरस्वातन्त्र्यनियतत्वेन समाधानं तत्रापि तुल्यम् ॥

उपायश्शरणशब्दार्थः । भगवत उपायान्तरस्थानविवेकेन स्वयत्नविनिवृत्तिः, तया च भरन्यासः फलति । उपायान्तरस्थानापत्तिलक्षणप्रपत्तिप्रकारप्रदर्शनायैव सर्वफलोपायभूतस्यापि भगवतः विशिष्य इदानीमुपायत्वेन अनुसन्धानमिह दर्शितम् । उपायान्तरभूतभक्तिस्थाने प्रपत्तेर्निवेशेपि प्रपत्त्यङ्गकभक्तिसाध्यं फलं प्रपत्तिवशीकृतेश्वरीयसहजकारुण्यादिस्वभावनिबन्धनमिति भगवत एव तत्र निवेश इति व्यवहारः । स च निवेशः-- अकिञ्चनस्य मम उपायान्तरानुष्ठानभरमन्तरेणैव अनुष्ठानसाध्यः फलजननसङ्कल्पः भवतैव भरतया स्वीकर्तव्य इति प्रार्थनया भरस्वीकारलक्षणः ।

एष एव निष्कृष्यमाणः स्वनिर्भरत्वपर्यन्तं भरसमर्पणमित्युच्यते । तथा च साम्प्रतमुपायशब्देन स्वयत्नविनिवृत्तिपर्यन्तभरसमर्पणं विवक्षितमिति साम्प्रतमेव ॥

यत्र उपायत्वप्रार्थनासमर्पणयोः पृथगुक्तिः तत्रोपायपदेन निरुक्तार्थो विवक्षया, भरसमर्पणस्पष्टीकरणाय पृथगुक्तिरिति प्रयोजनकल्पनया वा, त्र्यंशलक्षणे समर्पणे भरसमर्पणस्य अनेन पदेन विवक्षया वा पुनरुक्तिः परिहरणीया । एतादृशं केवललक्ष्मीशोपायत्वं विशेषतो न्यासविद्यायां वेद्याकारः **[?]** । तदाक्षिप्तश्च ज्ञानशक्त्यादिः ॥

प्रपद्ये इत्यनेन महाविश्वासरूपोध्यवसायविशेषः प्रत्येतव्यः । यादृशे च सति विश्वासे ततः कदापि न संशयोन्मेषः तादृशः प्रथमक्षणावच्छिन्नः प्रपत्त्यङ्गभूतः । मन्दविश्वासमप्यधिकारिणं विशिष्य कटाक्षयितुं प्रवृत्तः पूर्णविश्वासं कारयतीति प्रमाणप्रमितम् । इत्थं महाविश्वासकथनेनापि प्रार्थना कथिता भवति । अस्यामेव प्रार्थनायां गोप्तृत्ववरणमन्तर्भूतं न पृथग्भूतं वेदितव्यम् ॥

इदमत्र अवधेयम्-- इष्टप्राप्त्यनिष्टनिवृत्तिलक्षणं फलमुत्तरखण्डेन प्रार्थ्यते । अङ्गप्रपत्तिनिष्ठस्येव स्वतन्त्रप्रपत्तिनिष्ठस्य भक्तिलक्षणोपायप्रार्थना नास्ति । तस्मादकिञ्चनभरन्यासे शरण्यस्यैव उपायान्तरस्थानापत्त्या भरस्वीकारांशः प्रार्थ्यते इति वक्तव्यं, तथा च पूर्वोत्तरखण्डयोः विशिष्टो वाक्यार्थः--अकिञ्चनाय मह्यं भवतैव उपायान्तरस्थाने स्थित्या अभिमतफलविशेषो दातव्यः इति यथोक्तम् आत्मरक्षाभरनिक्षेपं करोमीति विशिष्टप्रार्थनान्वितः पर्यवस्यति ॥

अथ उत्तमपुरुषेण सिद्धोपायवशीकरणलक्षणः पुरुषप्रयत्नसाध्यः व्याजविशेषः स्वकर्तृकतया सिद्ध्यति । तदौचित्याऽऽयातो भवति कार्पण्यरूपः परिकरः । एवमकिञ्चनाधिकारिकभरसमर्पणलक्षणोपायकथनेन धर्मान्तरनैरपेक्ष्यम् अस्य अर्थसिद्धं भवति । एवं च शरणशब्दान्वितेन प्रपद्ये इति पदेन महाविश्वासगोप्तृत्ववरणात्मसमर्पणकार्पण्यरूपाणि चत्वारि निर्दिष्टानि । सविशेषणनारायणपदेन आनुकूल्यसङ्कल्पः प्रातिकूल्यवर्जनं च निर्दिष्टे । इति विवेकः ।

परिकराश्चैते सकृदेवानुष्ठेयाः । वर्तमाननिर्देशस्तु बर्हिर्लवननिर्वापादिमन्त्रेष्विवानुष्ठानकालाभिप्रायमूलः । अत्र -- वर्तमाननिर्देशेन वर्तमानदेहावधिकं प्रपत्तेरनुष्ठातव्यत्वं विवक्षितं, यावत्फलं प्रपत्तिपरिकरभूतमहाविश्वासानुवर्तनं विवक्षितं, प्रपत्त्यनुष्ठानवेलायां सङ्कल्पितस्य आनुकूल्यादेः प्रपत्तिपरिकरतया यावत्फलमनुवर्तनीयत्वं विवक्षितं, रागप्राप्तप्रपत्तिलक्षणभोगानुवर्तनं विवक्षितमिति पक्षचतुष्टयं प्रमाणविरुद्धं वेदितव्यम् ॥

इत्थं पूर्वखण्डेन सर्वशरण्यत्वं शरणागतिस्वरूपं तत्परिकरः तत्राधिकारिविशेषश्च इत्येतच्चतुष्टयं प्रकाशितम् । तेनानन्योपायत्वं सिद्धम् । महोदारभूतस्य शरण्यस्य, सर्वोत्कृष्टविषयकस्य

वशीकरणविशेषस्य, शेषतैकरसस्य स्वस्वरूपस्य चानुरूपं फलं समस्तविरोधिनिवृत्तिपर्यन्तं कैङ्कर्यमुत्तरखण्डेन प्रार्थ्यते । तेनानन्यप्रयोजनत्वमुक्तं भवति ॥

अत्र सविशेषनारायणशब्दः प्राप्यत्वानुगुणं स्वामित्वादिकम् अनन्तगुणविभूतिविशिष्टस्य स्वामिनः सर्वैरपि प्रकारैः निरतिशयं भोग्यत्वं च यथाप्रमाणं प्राधान्यतः प्रकटयति । एवमुभयविभूतिविशिष्टस्य प्राप्यतायामपि, आत्महविरुद्देश्यतया, शेषत्वनिरूपकतया, तन्निबन्धनकैङ्कर्यप्रतिसम्बन्धितया च दम्पत्योः प्रधानप्राप्यतां प्रदर्शयति श्रीमच्छब्दः ।

श्रीशब्दस्य प्रागुक्तार्थेषु सेव्यत्वादिकमत्र विवक्षितम् । श्रीमत इत्येतावता विशेष्यसिद्धावपि सर्वविधकैङ्कर्योपयिकप्रीतिविशेषप्रयोजनीभूतपरिपूर्णानुभवलाभाय नारायणायेति विशेष्यपदम् । तादर्थ्यलक्षणशेषत्वस्य सिद्धतया तदनुरूपं साध्यं परिपूर्णानुभवपूर्वकं कैङ्कर्यं प्रार्थनीयं चतुर्थ्या लक्ष्यते । तेन भवेयमिति पदमध्याहार्यम् ॥

एवं प्राधान्येन प्रथममिष्टप्राप्तिं संप्रार्थ्य अनन्तरमनिष्टनिवृत्तिर्मनसा प्रार्थ्यते । इष्टप्रार्थनया एव सामान्यतोऽनिष्टनिवृत्तिसिद्धावपि अनन्योपायत्वानन्यशेषित्वानन्यप्रयोजनत्वप्रत्यनीकरूपाणां रक्षणविरोधिशेषत्वविरोधिकैङ्कर्यविरोधिनाम् अनिष्टविशेषाणां विनिवृत्तये पुनरुपन्यासः । अत्रापि स्यामितिपदमध्याहार्यम् । न मम स्यामिति तदर्थः । इयम् अहङ्कारनिवृत्तिद्वारा सर्वानिष्टनिवृत्तिपरा योजना । किञ्चित्स्यादितिवा अध्याहार्यम् । न मम किञ्चित्स्यादिति तदर्थः । इयं सर्वविषयममकारनिवृत्तिद्वारा सर्वानिष्टनिवृत्तिपरा योजना । अत्र केचित् फलान्तरानुभवन्यायेन शङ्कितैः स्वाधीनस्वार्थकर्तृत्वस्वाधीनस्वार्थभोक्तृत्वादिलक्षणैः प्रधानदोषैःअसंस्पृष्टमिष्टं प्रार्थ्यते इत्यनुसन्दधते । केचिच्च नमसा निर्भरत्वमुच्यते इति स्वनिर्भरत्वपर्यन्तं भरसमर्पणमुच्यते इति अनुसन्दधते ।

इयमिन्द्राय हविर्न मेतिवत् अहं श्रीमते नारायणायेति भरफलसहितं स्वात्मानं परमात्मनि नमस्यन् न ममेति तत्र स्वसम्बन्धो निषिध्यते इतीयं समर्पणपरा योजना । अत्र पूर्वखण्डोऽङ्गपञ्चकपरः । उत्तरस्त्वङ्गिपरः । चतुर्थीपरसम्बन्धविधितत्परा । नमस्तु स्वसम्बन्धनिषेधतत्परम् । परनिरपेक्षकर्तृत्वादिनिषेधतत्परं वा । वस्तुतस्तु--स्थूलप्रक्रियया नमश्शब्दस्य समर्पणवाचित्वमुचितं वक्तुम् ॥

इदमत्र विवेक्तव्यम्-- कृत्स्नस्य द्वयस्यात्मसमर्पणपरत्वे स्वरूपानुरूपः फलविशेषोऽर्थसिद्धो भवति । उत्तरखण्डस्य पूर्वोक्तरीत्या फलपरत्वे पूर्वखण्डे शरणशब्दान्वितक्रियापदेन समर्पणं विवक्षितमित्यनुसन्धेयम् ॥

एवं द्वयघटिकपदैः क्रमेण शब्दतोऽर्थतश्च प्रकाशितानां प्रधानानामयमनुक्रमः -- पुरुषकारयोगः तन्नित्यत्वम् उपायवैशिष्ट्यं शरण्यगुणपूर्णत्वं सम्बन्धविशेषः दिव्यमङ्गलविग्रहयोगः तत्र

शेषभूतस्य उचितमवलम्बनं तत्र उपायत्वप्रकारः वशीकरणविशेषः तस्य च परिकर विशेषाः प्राप्यवैशिष्ट्यं गुणविभूतिविशिष्टप्राप्यत्वं कैङ्कर्यप्रतिसम्बन्धित्वं कैङ्कर्यप्रार्थना सर्वविधकैङ्कर्यलाभः सर्वानिष्टनिवृत्तिः तस्य च अत्यन्तिकत्वं पराधीनं परार्थं च कर्तृत्वं तथाविधं च भोक्तृत्वमित्यादयः तदपेक्षिताश्च मार्दवादय इति ॥

यद्यपीदं मन्त्ररत्नं शारीरशास्त्रवत् उत्पत्तिक्रममनुसृत्य तत्त्वहितपुरुषार्थान् प्रतिपादयति, तथापि "मुमुक्षुर्वै शरणमहं प्रपद्ये" इति श्वेताश्वतरमन्त्रवदर्थक्रमानुरोधेन फलप्रतिपादकं वाक्यं प्रथममनुसन्धेयम् । तथा मूलमन्त्रेप्ययं क्रमप्रकारो विवक्षित इत्याचार्याणामाशयः ॥

अत्र त्रयाणामवान्तरवाक्यानां उपायप्रधानतया एकवाक्यतः पर्यवसानप्रकारस्त्वित्थम्-- सर्वस्वामिनः सर्वप्रकारनिरतिशयभोग्यस्य श्रिया नित्ययुक्तस्य नारायणस्य चरणयोः शेषतैकस्वरूपानुरूपस्य सर्वदेशसर्वकालसर्वावस्थोचितस्य सर्वविधस्य परिपूर्णकैङ्कर्यस्य प्रतिबन्धकीभूतसर्वकर्मनिवृत्तिपूर्वकस्य प्राप्तये अत्यन्ताकिञ्चनोऽहं स्वरक्षणभरादिषु ममान्वयो यथा न स्यात्तथा श्रीमतो नारायणस्य चरणयोः अङ्गपञ्चकसम्पन्नमात्मरक्षाभरसमर्पणं करोमीति ॥

॥इति द्वयाधिकारः॥

## २९. चरमश्लोकाधिकारः

एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः ।

नागपर्यङ्कमुत्सृज्य त्यागतो मधुरां पुरीम् ॥

इत्युक्तरीत्या श्रियः पतिः सर्वेश्वरः साधुपरित्राणाय दुष्कृद्विनाशाय धर्मसंस्थापनाय च द्वारकानायकत्वेनावतीर्य निरतिशयसौलभ्येन पाण्डवानां शरणमुपगतानां दूतस्सन् अर्जुनं रथिनमात्मानं तस्य विधेयं सारथिं च चकार । स चार्जुनः स्वात्मानं निमित्तीकृत्य सर्वेश्वरः स्वप्रतिपक्षान् सर्वानपि निरसिष्यति । सर्वोपि च बन्धुजनः विनशिष्यतीत्यवधार्य अस्थानस्नेहजनितशोकेन अस्थानकारुण्येन युद्धेस्याचार्यादीनां हननं पापं कर्मेत्यादिभयेन च व्याकुलस्सन् श्रेयोजिज्ञासया भगवन्तमेव शरणं प्रापद्यत ।

सोपि भगवान्तस्य शोकाद्यपनोदनाय देहादिव्यतिरिक्तस्य परशेषतैकरसस्य नित्यस्यात्मनः स्वरूपं निरुक्तात्मयाथात्म्यज्ञानवतः परमपुरुषार्थलाभाय परम्परया कारणभूतं कर्मयोगं ज्ञानयोगं साक्षात्कारणं भक्तियोगं च सपरिकरमुपादिक्षत् ॥

अथ चाविलम्बेन परमपुरुषार्थप्राप्तये समुपजातत्वरातिशयं, उपायदौष्कर्यनिश्चयात्, अपेक्षितज्ञानशक्तिसमवधानेपि अतिशयितावधानचिरकालसाध्योपायस्वभावविमर्शजनिताभिमतसिद्ध्यनिश्चयाच्च

निरतिशयशोकाविष्टम् अर्जुनं व्याजीकृत्य परमकारुणिको गीतोपनिषदाचार्यः सकलविधपुरुषार्थसाधारणसाधनभूतं आनुकूल्यसङ्कल्पाद्यतिरिक्तपरिकरनिरपेक्षं क्षणमात्रसाध्यं रहस्यतममुपायविशेषं श्रोतव्यशेषरहितं यथा तथा उपदेशपर्यवसानभूतेन चरमश्लोकेन सकललोकरक्षार्थमुपदिशति-- सर्वधर्मेति । यद्यपि भगवद्गीताभाष्ये द्वितीययोजनायां प्रपत्तेरुपायविरोधिनिरसनमनुगृहीतम् । गद्ये तु उपेयविरोधिनिरसनम् । तथाप्युभयत्र उभयमुपादेयं नान्यतरेण अन्यतरद्व्यवच्छेदनीयम् । न्यायसाम्यात् प्रमाणान्तरानुसाराच्च प्रपदनस्य सकलाभिमतसाधनत्वमनाकुलम् ॥

श्रुतिसिद्धस्य अस्य रहस्यतमार्थस्य शरण्येन सर्वेश्वरेण स्वयमुपविष्टत्वात् पद्यमिदमुपायविशेषप्रधानमपि श्वेताश्वतरे मुमुक्षुर्वै शरणमहं प्रपद्ये उत्तमपुरुषश्रवणपदौचित्यायातमध्यमपुरुषघटितं सदपि अवश्यकर्तव्यत्वौपयिकाचार्यानुज्ञारूपविधावपि पर्यवस्यतीत्यवधेयम् । अत्र पूर्वार्धमुपायं विदधाति । उत्तरार्धं फलनिर्देशादिमुखेन तच्छेषभूतम् । विधिर्नाम-- आप्तस्य हितकामस्य नियोगः । स च लिङादिशब्दवाच्यः प्रदर्शकः अभिप्रायः ॥

धर्मशब्दः शास्त्रैकसमधिगम्यं पुरुषार्थसाधनमभिधत्ते । बहुवचनम् अङ्गिव्यक्तिबाहुल्यं व्यनक्ति । सर्वशब्दः परिकरसामस्त्यं वक्ति । परिकरस्यापि धर्मलक्षणक्रोडीकृतत्वात् सामानाधिकरण्योपपत्तिः । तथा च सकलाङ्गसहितसकलाङ्गिलाभः । एकशब्दप्रतिसम्बन्धितया सर्वशब्दयोजनायाम् अङ्गिभूतनानाविधानां धर्माणां कात्स्न्र्यं कथयति । सामान्येन प्रयुक्तोप्यत्रधर्मशब्दः प्रकरणवशात् मोक्षसाधनतया शास्त्रविहितानि नानाप्रकाराण्युपासनानि अभिदधाति ।

परित्यज्य इत्यत्र धात्वर्थस्त्यागः अकिञ्चनस्यानुसन्धानमूलकोपायान्तरनैराश्यम् । उपसर्गार्थः सर्वेणापि प्रकारेण तस्यातिशयितत्वम् । तच्च पूर्णानुष्ठानाशक्तौ यथाशक्त्यनुष्ठानं तदशक्तौ अनुकल्पानुष्ठानं तत्राप्यशक्तौ उपायोपायानुष्ठानं वा करिष्यामीति सर्वप्रकारायाः दुराशायाः राहित्येन विशिष्टत्वम् । ल्यप उतरकालिकत्वमर्थः । अवस्थित इत्यध्याहारः । तथा च "अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्" इत्यादिवत्, सर्वधर्मान् परित्यज्य अवस्थितस्त्वम्" इत्यनुवादः । अस्याधिकारिविशेषप्रदर्शनं प्रयोजनम् ॥

अथवा-- परित्यज्य इत्यन्तस्य " उपनीये वेदमध्यापयेत्" इत्यादिवद्विधिरूपत्वे-- अकिञ्चनस्य प्रतिसन्धानरूपं कार्पण्यं प्रपत्त्यङ्गतया विधीयते इत्यभ्युपगन्तव्यम्, तादृशानुसन्धानलाभश्च धात्वर्थे ज्ञानमप्यन्तर्भाव्य सर्वधर्मकर्तृकस्वकर्मकत्यागं विज्ञाय स्वधर्मस्वरूपयोग्यताराहित्यमनुसन्धायेत्यर्थविवक्षया कथञ्चिद्वक्तव्यः । वस्तुतस्तु -- परित्यज्येत्यस्य अनपेक्ष्य इत्यर्थविवक्षया स्वेतरस्य कस्यापि शमदमशौचाचमनादिलक्षणस्य धर्मस्यापेक्षाभावो नैरपेक्ष्यमत्र विधीयते इति युक्तः पन्थाः ॥

अत्र विधिपक्षे-- कर्मयोगज्ञानयोगभक्तियोगरूपाणां स्वरूपतस्त्यागोऽङ्गतया विधीयत इति वाक्यार्थवर्णनं प्रपत्तेस्सर्वाधिकारिकत्वविरुद्धम् । धर्मानुष्ठानशक्तं प्रति हि धर्मत्यागो विधीयेत । शक्तमात्राधिकारिकत्वाभ्युपगमस्तु आकिञ्चन्याधिकारिकत्वपरसर्वशास्त्रसम्प्रदायविरुद्धः । भगवदन्त्यन्तपरतन्त्रतया सर्वोप्युपायान्तरेषु नित्याशक्त एवेति त्यागविधिरेव युक्त इति वादोपि, अशक्ततयैव त्यागस्य स्वतः प्राप्ततया विधेयत्वासम्भवेन विरुद्धः । विरुद्धश्च तुल्यन्यायतया शरणं व्रजेत्युत्तरविधिनापि । शक्तं प्रति विधिरशक्तं प्रत्यनुवाद इति कल्पनं तु एकप्रयोगविरुद्धम् ॥

शक्तमात्राधिकारिकत्वे गुरुलघूपायविकल्पानुपपत्तिः अर्थाद्यर्थिनः कृषिवाणिज्यादिलक्षणगुरुलघूपायविकल्पः अधिकारिविशेषव्यवस्थयैवोपपन्न इति लोकेपि सिद्धमेतत् । अथ शक्तस्यैव लघूपायप्ररोचनार्थं गुरूपायं विधाय तस्यैव निषेधः क्रियते इति चेत् -- अधिकारिभेदाभावे व्याहतमेवैतत् । अनुपायानामुपायत्वेन विधानं तु श्रुतिस्मृत्यादीनामप्रामाण्यप्रसङ्गदूषितम् ॥

अथ पूर्णज्ञानविश्वासः प्रपदनेऽधिकुरुते मन्दज्ञानविश्वासस्तु उपासने इत्यधिकारिविशेषसिद्धिरिति चेत् -- पूर्णज्ञानविश्वासवतां परमास्तिकानां चरमश्लोकं दृष्टवतां व्यासादीनां उपासनानधिकारप्रसङ्गः । वस्तुतः प्रपन्नानामेव तेषां लोकसङ्ग्रहार्थमुपासनानुष्ठानमिति कल्पनं तु स्वाधिकारविरुद्धेन अनुष्ठानेन लोकसङ्ग्रहणस्य प्रत्यवायापादकत्वात् सन्न्यासिनामपि स्वाश्रमविरुद्धेन गृहस्थैकान्तधर्मेण लोकसङ्ग्रहकरणप्रसङ्गापाताच्च पराहतम् । अनुचितं च कैङ्कर्यबुद्ध्यापि प्रपन्नानां स्वाधिकारविरुद्धधर्मानुष्ठानम् ॥

अथ स्वविहितस्वशक्ययावद्धर्माणां स्वरूपेण परित्यागः अङ्गतया विधीयेत नास्मिन् पक्षे सर्वाधिकारिकत्वविरोधः सर्वत्रशक्ययावद्धर्मत्यागसम्भवात् । इति चेदत्र उच्यते-- प्रपत्त्युत्तरकालावच्छिन्नः त्यागो वा आहोस्वित् प्रपत्त्यनुष्ठानक्षणावच्छिन्नो वा विवक्षितः । आद्ये स्वीयवर्णाश्रमधर्मान् अहिंसासत्यवचनादिसामान्यधर्मान् आचार्यवन्दनादिविशिष्टधर्मान्श्च परित्यज्य पशुमृगपक्ष्यादिवद्वर्तितव्यं प्रपन्नैरिति स्यात् । अनन्तरे --तदानीमसम्भावितानां त्यागविधिकल्पनानर्थक्यात् सम्भावितानां च क्षेत्रवासशिखायज्ञोपवीतोर्ध्वपुण्ड्रादीनां परित्यागस्य प्रपत्त्यङ्गता स्यात् ॥

अथ स्यात् कर्मादीनां स्वरूपत्यागासम्भवेपि उपायताबुद्धित्यागविधिरिति । न स्यात् उपायताबुद्धित्यागपूर्वमनुष्ठितस्वरूपस्य अङ्गतापातेन अकिञ्चनाधिकारिकत्वनैरपेक्ष्याद्यसिद्ध्यापत्तेः । देवतान्तरधर्मत्यागस्तु उपासकसाधारण इति न कश्चिद्विशेषः । तस्मादुक्तः पन्था एव सुपन्थाः ॥

अत्रास्मिन् नैरपेक्ष्यविधिपक्षे प्रतियोगिप्राप्तिस्तु विद्यान्तरङ्गतया अधीतानां वर्णाश्रमधर्मशमदमगतिचिन्तनादीनां सर्ववेदान्तप्रत्ययन्यायायातमुपसंहारमुपजीवतीति स्फुटमेतद्वेदान्तविदाम् । ततश्च अनुष्ठानं त्यागो वा प्रपत्तेः साङ्गं , किं तु अत्राशक्यनैराश्यमधिकारकोटिं प्रविशति । नित्यनैमित्तिकानुष्ठानमाज्ञानुपालनलक्षणं कैङ्कर्यकोटिं प्रविशति । प्रपत्त्यनुष्ठानकालावच्छिन्नस्य आनुकूल्यसङ्कल्पमात्रस्यैव अङ्गतया श्रवणात् अनन्तरकालावच्छिन्नमनुष्ठानं आज्ञाकैङ्कर्यतया स्वविधिप्रयुक्तं न तु तादृशसङ्कल्पप्रयुक्तमिति न तस्याप्यङ्गत्वशङ्काप्रसङ्गः ॥

तर्हि नित्यनैमित्तिकान्तर्भूतानां प्रभूतकैङ्कर्यलक्षणानां कर्मणां किं प्रयोजनम्? न तावदुपायान्तरं परित्यक्तव्यत्वात् नाप्युपात्तोपायः निरपेक्षत्वात् । नाप्यकरणे प्रत्यवायः नित्यनैमित्तिकविलक्षणत्वात् । न चापि फलान्तरं हेयत्वात् । न च स्वयं प्रयोजनत्वं पारतन्त्र्यविरुद्धत्वात् । न च भगवदभिप्रायः अनपरोक्षत्वात् । इति ॥ अत्रोच्यते-- भगवद्विषयकप्रीतिविशेष एव । स च सत्त्वोत्तरस्वस्वभावानुगुणसुहृत्पुत्राद्युपलालनेष्विव भगवत्प्रीणनेषु शास्त्रदृष्ट्या प्रवर्तक इति वेदितव्यम् ॥

अथ न चासौ प्रपन्नः शास्त्रवश्यः अपि तु स्वरूपवश्यः स्वरूपविवेक एव हि अस्य त्याज्योपादेयविभागनिर्णायक इति । नैवम् -- शास्त्रानादरे न केवलं स्वरूपविज्ञानं प्रभवति त्याज्योपादेयौ विवेचयितुं, अपि तु स्वरूपविवेकः सूचयत्यौचित्यमात्रम् अन्यथा यावन्मोक्षापरोक्षं आत्मरुचेरेव नियामकत्वात् उपचारापचारविभागानुपपत्तिः । विधिनिषेधविभागानुपपत्तिश्च । न शास्त्रं व्यवच्छिनत्ति किं तु प्रीतेः प्रेरकातिशयत्वं द्योतयति ॥

एवं च प्रपन्नानामपि शास्त्रवश्यत्वानपगमात् शास्त्रोक्तकैङ्कर्याणामेवकर्तव्यत्वाच्च विधिनिषेधलङ्घनपक्षः विहितनिषिद्धत्यागपक्षः वर्णाश्रमधर्ममात्रत्यागपक्षः तत्र विकल्पपक्षः अनुष्ठानपक्षे भगवत्प्रीतिलक्षणाभ्युदयाभावः केवलं न तु प्रत्यवाय इति पक्षः तथा लोकविरोधरूप एव प्रत्यवाय इति पक्षः । इत्यादयः पक्षाः शास्त्रसम्प्रदायविरुद्धा वेदितव्याः । यद्यपि च सन्ध्यादिविधयः धर्मशास्त्रसूत्रेषु इतिहासपुराणेषु भगवच्छास्त्रसंहितासु च भिन्नभिन्नप्रकारा दृश्यन्ते ।तथापि तत्तत्सम्प्रदायनियतः तत्तद्विशेष इति नाव्यवस्थाप्रसङ्गः । तथा शास्त्रव्यवस्थासिद्ध्यर्थं भक्तजन्मादिचिन्तनमपि नानर्थमावहति, अपि तु अवज्ञार्थमेव तत् अनर्थमादधातीति ॥

तथा च विधिपक्षे--कार्पण्यानुसन्धानं धर्मान्तरनैरपेक्ष्यं अशक्यारम्भनिवर्तनं ब्रह्मास्त्रन्यायेन धर्मान्तरविरोधश्च इत्येते पञ्चार्थाः । अनुवादपक्षे अधिकारविशेष इति षडिमे प्रथमपादार्थाः॥

अस्मिन्श्च उपायविशेषे भगवतः निरपेक्षोपायत्वं विशेषतो वेद्याकारः । तत्र प्रधानतया परिकरतया च अपेक्षिताः सर्वाकाराः मामेकमित्यनेन विवक्ष्यन्ते । तत्रादानवतां रहस्यज्ञानमूलं सर्वसौलभ्यं

स्वातन्त्र्यं शुभाश्रयत्वलक्षणदिव्यमङ्गलविग्रहयोगित्वं अवसरप्रतीक्षत्वमभिमुखत्वं स्वामित्ववात्सल्यज्ञानशक्तिकारुण्यादिकं च मामित्यनेन विवक्ष्यते ।

एकशब्देन तु प्राप्यस्यैव प्रापकत्वं निरपेक्षकर्तृत्वं प्रपत्तेः व्याजमात्रत्वं उपायान्तरासहितत्वं तदङ्गैरप्यनन्वितत्वं सकलसाध्यसाधनत्वं चेति षडर्थाः प्रतिपाद्यन्ते । केचित्तु एकशब्देन देवतान्तरं व्यावर्तयन्ति । तेपि श्रियमपि व्यवच्छिन्दन्ति । ततश्चोपायद्वित्वप्रसङ्गं पा**[?]**रयन्ति । तत्तु--अनन्यपरानेकश्रुतिस्मृतिगुरूक्त्यनुसारेण विशिष्टस्यैव प्रपत्तव्यत्वनिर्णयात् असुन्दरम् ।अन्ये तु भगवति स्वविषयकस्वीका नैरपेक्ष्यबुद्धिरेकशब्दार्थ इति कथयन्ति । तत्रापि दृष्टिविधित्वापत्त्या व्रजेति स्ववचनविरोधापत्त्या च अस्वरसता वेदितव्या ॥

तत्र सिद्धोपायं प्रति साध्योपायस्य प्रपदनस्य व्याजमात्रतामुपजीव्य " प्रपदनं नाम संबन्धज्ञानमात्रं सिद्धोपायप्रतिपत्तिमात्रम् अनिवारणमात्रम् अनुमतिमात्रम् अचिद्व्यावृत्तिमात्रं चैतन्यकृत्यं चित्तसमाधानम् अधिकारिविशेषणमित्यतिवदन्ति विद्वांसः । एतत्सर्वं शरणं व्रजेतिविधिं विरुणद्धि समावहति च अतिप्रसङ्गम् ॥

तथा हि-- आद्यपक्षद्वये तादृशज्ञानस्य वाक्यजधीरूपत्वे मोक्षोपायत्वे च अविधेयज्ञानवादाभ्युपगमात् भाष्यादिविरोधः । अनन्तरकर्तव्यज्ञानरूपत्वे तु इष्टापत्तिः । अनिवारणमात्रमिति तृतीयपक्षे स्वस्मिन्ननिवारणशक्तेरभ्युपगन्तव्यत्वात् ईश्वरस्य ईश्वरत्वं सङ्कुचितं स्यात् । अपराधकरणेन निवारयति चेत् प्रसादनकरणेन भवितव्यम् । स्वरक्षणार्थस्वव्यापारे निवारयति चेत् सुषुप्त्याद्यवस्थासु उपायसिद्ध्या मोक्षप्रसङ्गः । अनुमतिमात्रमिति तुरीयपक्षे चैतन्यकृत्यमिति षष्ठपक्षे च उपासनाविशेषप्रसङ्गः । अचिद्व्यावृत्तिमात्रमिति पञ्चमपक्षे तु प्रातिकूल्यस्य अप्रजोजकत्वात् सर्वमुक्तिप्रसङ्गः । चित्तसमाधानमिति सप्तमपक्षे समाधानस्य फलानुपयुक्तत्वे पुरुषरुचिभेदेन भिन्नत्वात् यथेष्टाचरणप्रसङ्गः । उपयुक्तत्वे तु इष्टापत्तिः । अधिकारिविशेषमित्यष्टमपक्षोपि प्रपदनस्य फलतत्कामनाभ्यां भिन्नत्वात् विधेयान्तरशून्यत्वाच्च प्रतिक्षिप्तो वेदितव्यः ।

शरणं व्रजेत्यनेन सपरिकरात्मनिक्षेपोभिधीयते । प्रपद्ये इत्यत्रानुष्ठात्रनुसन्धानरूपत्वात् उत्तमपुरुषः । अत्रत्वभिमुखचेतनं प्रति विधीयमानत्वान्मध्यमपुरुषः ।अत्यन्तपरतन्त्रस्यापि चेतनस्य ज्ञानेच्छापूर्वकप्रयत्नाश्रयत्वरूपं कर्तृत्वं स्वाभाविकं फलदशासंसारदशासाधारणम् ॥ फलदशायां कैङ्कर्यकर्तृत्वं केवलमीश्वरेच्छानुविधायस्वेच्छानिबन्धनम् । संसारदशायां बन्धहेतुराकार एव त्याज्यः । मोक्षहेतुस्तु उपादेय एव । कस्मिन्श्चित् कार्यविशेषे तादृशप्रवृत्याश्रयत्वात् जीवः कर्ता प्रवर्तकत्वादीश्वरः कारयिता । तादृशप्रवृत्तेः अनिहन्तृत्वात् उपेक्षकः । अनुमतत्वादनुमन्ता । सहप्रवृत्तत्वात् सहकारीत्युच्यते इति विषयभेदादविरोधः ॥

एवं स्वबुद्धिपूर्वकप्रवृत्तिशक्तेः जीवस्य नियोगयोग्यत्वात् व्रजेति विधिः नानुपपन्नः । एवं विहितस्य निक्षेपस्य सकृत्कृतः शास्त्रार्थः इति न्यायस्यापवादविरहात् सकृदेवप्रपन्नायेत्यादिवचनबलाच्च

सकृत्कर्तव्यत्वं सुप्रतिष्ठितम् । सर्वशक्ते परमोदारे च न्यस्तभरस्य फलविलम्बेस्वाभिप्रायविशेषमन्तरेण हेत्वन्तरविरहात् अस्योपायविशेषस्य प्रारब्धांशनिवर्तनं विशेषः ॥

एवं पूर्वार्धेन विलक्षणमुपायं विधाय उत्तरार्धेन तच्छेषभूतेन अनिष्टनिवृत्तिलक्षणं फलमुद्दिशति । --अहमिति । तत्रोत्तमपुरुषेणाहमिति सिद्धावप्यधिकोक्तिः अर्थस्वभावेन सर्वपापविमोचनौपयिकाघटितघटनाशक्त्यादिकं प्रधानफलित्वादिकं च द्योतयति । त्वामितिपदम् अधिगतपरावरतत्त्वविवेकं मयि न्यस्तभरं कृतकृत्यं कर्तव्यान्तरशेषरहितं व्यनक्ति । एवं मोक्षप्रदं मुमुक्षुं च निर्दिश्य बन्धकं सांसारिकपुण्यपापजातं वक्ति-- सर्वपापेभ्य इति । एतच्च प्रपत्तेः सर्वफलसाधनतया तत्तदधिकारानुरोधेन तत्तदभीष्टप्रतिबन्धकव्यक्तिमुपलक्षयति । पापं नाम शास्त्रवेद्यमनर्थसाधनम् । अनर्थश्च प्रतिकूलप्राप्तिः अनुकूलनिवृत्तिश्च । सर्वशब्दः प्रतिबन्धककर्मणां कार्यकारणरूपेण सन्तन्यमानं अविद्यावासनारुचिप्रकृतिसम्बन्धप्रवाहमपि पापराशौ प्रवेशयति ॥

मोक्षयिष्यामीति॥ अनेनाधिकार्यभिसन्धिरेव नियामको न तु मदभिसन्धिरिति विज्ञायते । सर्वपापविमोचनं नाम अनादिकालविपरीतानुष्ठानजनितनिग्रहाभिप्रायपरित्यागः । सोऽपि मत्प्रसादात् परां शान्तिमचिरेणाधिगच्छतीत्याकारकोभिप्रायविशेषः । एतादृश पुण्यपापलक्षणसंसारकारणस्य आत्यन्तिकनिरासस्तु -- अन्तिमदशायां सुकृतानां सुहृदुपायनं दुष्कृतानां द्विषदुपायनं , न तु उपायारम्भदशायामेव, अन्यथा आश्रितविषयानुकूल्यप्रातिकूल्ययोः प्रातिकूल्यपरिहारलक्षणस्य क्षमापणस्य च निरवकाशेन वैयर्थ्यप्रसङ्गः । अन्यानुष्ठितकर्मणामस्य सङ्क्रमेऽतिप्रसङ्गस्तु मुमुक्षुविषयकानुकूल्यप्रातिकूल्यलक्षणोपचारापचाररूपकर्मनिबन्धनत्वात् सङ्क्रमणस्य परिहृतः । तथा च मुमुक्षुविषयेनुकूलेन भवितव्यमिति विभाव्यम् ॥

इत्थं सकल **_???______** कथनेन सेतुभङ्गे स्रोतःप्रवृत्तिवतावरणभङ्गे प्रकाशप्रसरवच्च स्वतः प्राप्तः परिपूर्णभगवदनुग्रहाविर्भावः कथितो भवति । आत्ममात्रानुभवरूपं कैवल्यं तु न सर्वपापनिवृत्तिपूर्वकं, सत्यां सर्वपापनिवृत्तौ भगवदनुभवसङ्कोचे कारणविरहात् केवलात्मानुभवकारणभूतस्य ब्रह्मानुभवप्रतिबन्धकीभूतस्य च कर्मणस्सत्त्वे सर्वपापनिवृत्त्यनुपपत्तिश्च । शास्त्रश्रवणदशायां योगदशायां च जायमानो ब्रह्मानुभवः सुकृतविशेषमूलः करणायत्तः परिमितः विच्छेदसहितश्च । मुक्तदशायां जायमानस्तु सङ्कोचविच्छेदकारणविरहात् परिपूर्णविषयः पुनर्विच्छेदरहितश्च । तादृशानुभवपरीवाहः सर्वविधकैङ्कर्यसमूहः ॥

एवमुपदिष्टेऽर्थे विश्वासदार्ढ्यार्थं पुनः फलितार्थमाह-- मा शुच इति । अत्र विवर्तनीयः शोकः न यथावस्थितात्मोपदेशनिवृत्तः बन्धुविनाशनिमित्तः प्राक्तनः अपि तु मा शुचः सम्पदं दैवीमिति वाक्यनिवर्तनीयशोकान्तरवद्विलक्षणः। तथा हि --चिरकालसेव्यमन्तरायबहुलम् अत्यन्तावहितानामपि कृच्छ्रसाध्यमुपायं फलविषयं चात्युत्कटमभिनिवेशं पर्यालोच्य शोचन्तमर्जुनमुद्दिश्य क्षणकालसाध्यं सर्वान्तरायरहितं सुकरमुपायविशेषमुपदिश्य ततः फलसिद्धौ

निर्भरो निस्संशयश्च भूया इत्युपदेशे सति उपायान्तरादिदौष्कर्यादिमूलक एवायं शोको नान्य इति स्फुटमेवैतत् ॥

अत्र मा शुच इत्यनेन शोकनिमित्तानां सर्वेषामप्यंशानां मोचनीयत्वावगमात् आर्त्यतिशयवतां तदानीमेव सर्वपापनिवृत्तिः । शरीरावसाने मोक्षकांक्षिणां मन्दार्तिमतां तदानीम् । तत्राप्यायुश्शेषस्यानिष्टतमत्वे प्रपत्त्यन्तरवशीकृतसर्वशक्तिसङ्कल्पेन शेषांशस्यापि निवृत्तौ भवति । आर्तदृप्तभेदस्तु सुकृततारतम्यमूलकभगवदनुग्रहतारतम्यनिबन्धनः । तर्हि आर्तप्रपत्तौ आत्महननदोषप्रसङ्ग इति चेत् प्रायश्चित्तविशेषेष्विव न दोषप्रसङ्गः । परन्तु दृप्तस्य चिरंजीवितुमिच्छतः चिकित्साद्यतिलङ्घनेन कायवियोजने अस्त्येव आत्महिंसनापराधः ॥

किं च अत्राभिधीयमानायाः शोकनिवृत्तेः केनापिप्रकारेण सङ्कोचविरहात् उपायविज्ञाने तदनुष्ठानेन ये सर्वप्रकाराश्शोकहेतवः तेपि निवर्त्यन्ते । यतोनुष्ठानपर्यन्तत्वमन्तरेण नोपदेशजनितं ज्ञानं सप्रयोजनम् । इतरथा कुलिङ्गशकुनिसाम्यापत्तिः । ततश्च पूर्वापरमध्यदशासु अधिकारविशेषम् उपायविशेषम् उत्तरकृत्यविशेषं परिपूर्णकैङ्कर्यपर्यन्तफलविशेषं च पर्यालोच्य सम्भावितानां शोकानां निवृत्तिप्रकारस्त्वित्थम् --अनुष्ठीयमानशरणागतिधर्मस्य जातिवर्णाश्रमादिविशेषनियमविरहात्प्राप्यरुचिः प्रापकविश्वासः कार्पण्यादिकं चास्ति चेत् अनधिकारनिबन्धनः शोको निर्णिबन्धनः । साध्यलक्षणश्चोपायविशेषः साध्यलक्षणश्चोपायविशेषः सपरिकरः क्षणकालसाध्यसंकरः आवृत्तिनिरपेक्षः उपायान्तराव्यवहितः दुष्करपरिकरान्तररहितः फलसमयनियमविकलश्च । सिद्धस्तु लघूपायमात्रेणापि वशीकार्यः फलप्रदाता शरण्यः सर्वसुलभः विश्वसनीयतमः परमकारुणिकः निरङ्कुशस्वतन्त्रः । अतः सर्वप्रकारविपरीतोपायान्तरावलम्बननिबन्धनः शोको निर्हेतुकः । एतादृशोपायानुष्ठानादनन्तरम् आज्ञयानुज्ञया वा क्रियमाणानि सर्वाणि कर्माणि । प्रपत्त्यपरिकराणीति तेषां देशकालादि वैगुण्येन वैकल्ये सत्यपि उपासनस्येव अस्या अपि परिकरवैकल्यशङ्कया शोकस्त्याज्य एव । किं च भगवत्कैङ्कर्यानर्हतापादकानि बुद्धिपूर्वाणि महाभागवतापचाररूपाणि कर्माणि समुत्पादयतः दग्धपटतुल्यताम् आत्मानमापादयतः प्रारब्धस्य पापविशेषस्य प्रशमाय प्रपत्यनुष्ठानकाले सङ्कल्पविशेषं तदनन्तरकाले वा प्रपत्त्यन्तरमनुतिष्ठन् निरपराधं चोत्तरकृत्यं चिकीर्षन् उत्तरापराधप्रसङ्गनिमित्तं शोकं प्रभवति परित्यक्तुम् । एवं निरपराधमुत्तरकृत्यमनाकाङ्क्षमाणानामुत्तराघं प्रसक्तमपि मृदुचेतसामनुतापादिमूलकेन पुनः प्रपदनलक्षणेन प्रायश्चित्तेन कठिनचेतसां शिक्षालक्षणेनोपक्लेशादिना वा प्रशमयति शरण्य इति बुद्धिपूर्वापराधमूलकनरकादिमहाक्लेशसम्भावनाहेतुकः परित्यक्तव्यः शोकः । दृप्तस्य विलम्बेनाप्यपेक्षितसमये फलसिद्धौ संशयविरहात् केनापि कारणविशेषेण सुकृतविशेषलक्षणस्य प्रपदनस्यापि विनाशास्सम्भवेत् सम्भवेद्वा पापविशेषेण जननान्तरमात्मनः इत्यपि शोकः परित्यक्तव्यः । अधन्यप्रयोजनस्यास्य प्रपन्नस्य परमफलप्रतिबन्धकीभूतानां सर्वेषां पापानां निवृत्तत्वात् केवलात्मानुभवादिलक्षणैरप्यन्तरायैः फलविलम्बशङ्कया न शोकावकाशः ॥

एवं सर्वप्रकारशोकहेतुभ्यो मोचनीयतया मदीयानुग्रहविषयीभूतस्य तव शोकः उपायविशेषवैलक्षण्यस्य सिद्धोपायभूतशरण्यप्रभावस्य न्यस्तभरतया कृतकृत्यस्य तस्य स्वभावस्य च नात्यन्तमुचितः । एवं

चरमश्लोके सारतमस्य मा शुच इत्यंशस्य तात्पर्यम्, एतच्च आत्मीयचरमदशायां सदाचार्याः सच्छिष्येभ्यः समुपदिशेयुः । ततश्च चरमश्लोकचरमवाक्यार्थः सुतरां रहस्यतममिति ध्येयम् ॥

अथ चास्मिन् श्लोके समुपदिष्टानामर्थानां अयमनुक्रमः-- अधिकारविशेषः आकिञ्चन्यपुरस्कारः दुष्करपरिकरान्तरनैरपेक्ष्यम् अशक्यप्रवृत्त्यनौचित्यम् दुष्कराभिनिवेशवैयर्थ्यम् उपायविशेषश्च इत्येते (६) प्रथमपादार्थाः । शरण्यविशेषः तस्य सुलभत्वसुशीलत्वादिगुणपूर्णत्वं हिततमोपदेष्टृत्वं च इत्येते (३) मामित्यस्यार्थाः । प्राप्यस्यैव प्रापकत्वं निरपेक्षसर्वविषयनिष्प्रत्यूहकर्तृत्वं व्याजमात्रप्रतीक्षत्वं उपायान्तरव्यवधाननिरपेक्षत्वं परिकरान्तरनिरपेक्षप्रसादयत्वं सर्वफलादयर्थिशरण्यत्वं शरण्यवैशिष्ट्यं च (७) इत्येकपदार्थाः । उपायान्तरस्थानविवेश्यत्वं भरस्वीकर्तृत्वमित्येतौ (२) शरणपदार्थौ। भरन्यासरूपसाध्योपायविशेषः तस्य परिकराः सर्वाधिकारत्वं सकृत्कर्तव्यत्वं संकरत्वं अविलम्बितफलप्रदत्वंप्रारब्धनिवर्तनक्षमत्वम् इत्येते (७) व्रजधात्वर्थाः । अधिकारिणा पराधीनकर्तृत्वं शास्त्रवश्यत्वं च इत्येतौ मध्यमपुरुषार्थौ । परमकारुणिकत्वं सुप्रसन्नत्वं निरङ्कुशस्वतन्त्रत्वं दुर्निवारत्वं परानपेक्षत्वं अवसरप्रतीक्षत्वमित्येते (६) अहमित्यस्यार्थाः । शरणागतस्य कृतकृत्यत्वं परिगृहीतमुपायं फलं च प्रतिकर्तव्यान्तरराहित्यं भगवदत्यर्थप्रियत्वमित्येते (३) त्वामित्यस्यार्थाः । त्रैकालकविरोधि **[??]**------स्त्वं विरोधि-**[?? ]**----वैचित्र्यं च इत्येतौ (२) सर्वपापशब्दार्थौ । ईश्वरसङ्कल्पमात्रनिवर्त्यत्वं प्रपन्नेच्छानियतविरोधिनिवृत्तिकालवत्त्वं विरोधिनिवृत्तिस्वरूपं कैवल्यव्यावृत्तयथावस्थितस्वरूपाविर्भावः परिपूर्णो भगवदनुभवः सर्वविधकैङ्कर्यलाभःअपुनरावृत्तिश्च इत्येते (७) मोक्षयिष्यामीत्यस्यार्थाः । पूर्वं शोकहेतुप्राचुर्यं पश्चात् शोकानर्हत्वं निस्संशयत्वं शोकनिवृत्तिः निर्भयत्वं हर्षविशेषः शरीरपातकालप्रतीक्षत्वं निरपराधकैङ्कर्यरसिकत्वम् इत्येते (८) चरमवाक्यार्थाः । तथा च त्रिपञ्चाशत्संख्याका अर्थविशेषाः प्रधाना अनुशिष्टाः । ---**[? ?]**------- स्वयमूहनीयाः ॥

अयमत्र विशिष्टवाक्यार्थः-- अल्पज्ञोल्पशक्तिः परिमितकालवर्ती विलम्बासहिष्णुश्च त्वम् दुरधिगमानि दुरनुष्ठानानि विलम्बितफलानि उपायान्तराण्यन्तरेण सर्वसुलभं सर्वलोकशरण्यं शरण्योपयुक्तसर्वाकारविशिष्टं मामेकमेव उपायतया अध्यवस्य अङ्गपञ्चकसम्पन्नम् आत्मरक्षाभरसमर्पणं कुरु । एवमनुष्ठितोपायं कृतकृत्यं **[?]**देकरक्षणीयं अत्यर्थप्रियं त्वां परमकारुणिकः सुप्रसन्नः निरङ्कुशस्वतन्त्रः स्वार्थप्रवृत्तः अहमेव सङ्कल्पमात्रेण बहुप्रकारादनन्तादुदुरत्ययात् सर्वस्माद्विरोधिवर्गात् अपुनरङ्कुरं विमोच्य परिपूर्णमदनुभवेन तुल्यभोगं विधाय तादृशानुभवपरीवाहरूपसर्वदेशसर्वकालसर्वावस्थोचिताशेषकैङ्कर्यं अङ्गीकृत्यानन्दयिष्यामि । किञ्चिदपि विचिन्त्य शोकं मा कृथा इति ॥

॥इति चरमश्लोकाधिकारसारार्थः॥

## ३०. आचार्यकृत्याधिकारः

एवं परमाचार्यं सर्वेश्वरमारभ्य सदाचार्यसम्प्रदायेन समागतान् सिंहीस्तन्यवद्विजातीयैरनास्वादितरसान् रहस्यत्रयार्थान् सङ्गृह्य स्वयमनुसन्धाय

सात्वतसंहिताभगवद्गीता
वसिष्ठकरालसंवादशाण्डिल्यस्मृतिसात्यकीतन्त्राद्युक्तगुरुशिष्यनियममनुसृत्य शरण्यानुमत्यर्हतापादकसात्विकतास्तिक्यादिगुणशालिभ्यः दैवप्रकृतिभ्यः परीक्षितगुणेभ्यः सच्छिष्येभ्यः प्रकाश्य तद्विपरीतगुणेभ्यश्च प्रच्छाद्य कृतार्था भवन्ति नः पूर्वाचार्याः । तथा तत्वहितपुरुषार्थस्वरूपमपि इत्थं सङ्ग्रहरुचीनामुपदिशन्ति । यथा देहेन्द्रियादिलक्षणाचेतनविलक्षणः नित्यः चेतनोस्तिप्रत्यगात्मा । एतादृशचेतनाचेतनविलक्षणः सर्वान्तर्याम्येकः शेषी परमात्मास्ति । एतं परमात्मानमन्तरेण स्वयमन्यो वा न कश्चिदपि प्रभवत्यात्मानमवितुमिति तत्वस्वरूपम् । अनादेश्च कालात् प्रसरतः गर्भवासादिलक्षणक्लेशनिवारणाय आचार्यानुगृहीतद्वयवचनमुखेन श्रीमन्नारायणचरणौ शरणमुपगम्य आत्मात्मीयं च यत्किञ्चित्तत्सर्वं तस्मिन् समर्पणीयमिति हितस्वरूपम् । एवं सदाचार्यसमुदिष्टवर्त्मनापरिगृहीतः परमात्मा नैव परित्यजति कदाचिदपि क्वचिदपि केचनचिदपि हेतुविशेषेणेति विश्वस्य अप**[?]**रपूर्वरङ्गभूतया निरपराधानुकूलवृत्त्या वर्तितव्यमिति उत्तरकृत्यस्वरूपमिति॥

॥इत्याचार्यकृत्यम् ॥

## ३१. शिष्यकृत्याधिकारः

अथ शिष्यकृत्यम् --इत्थं रहस्यतमं सर्वमप्यर्थं परमदरिद्रस्य सदन**[?]** एव निधिमिव निदर्शयतः परमोपकारकस्य आचार्यस्य विषये कृतज्ञे**[?]** । दोग्ध्रा **[?]**वर्तितव्यमिति श्रुत्याद्यनुशासनंन प्रत्युपकारप्रदर्शनार्थम् । अपि तु ऐहिकामुष्मिकगर्हार्हतापादकदुस्सहप्रत्यवायानुदयार्थम् । तथा क्वचित्सर्वस्वादि दानस्मरणमपि प्रणिपातादिवत्कतिपयकर्तव्यप्रदशनपरम्, न तु नैस्पृहयेण कारुण्येन चोपदिशतो अनन्यप्रयोजनस्य प्रत्युपकारपरम् । देववदाचार्योपासनश्रवणमपि शास्त्रचक्षुःप्रकाशार्थं भगवदनुभववद्विलक्षणस्या**[??]** नुभवस्याविच्छेदार्थम् ।

न तु प्रत्युपकारार्थम्, यतोत्राचार्यविषये प्रत्युपकारराहित्यं सकलशास्त्रसमुद्घोषितम् । ततोत्र क्वचित् प्रत्युपकारदृष्टिः महती विनष्टिः ॥

अथ विद्याग्रहणादनन्तरं शिष्यस्य कर्तव्यानीमानि -- यथा -- विज्ञानविपरीतानुष्ठानेन कपालस्थतोयवत् इतरानुपचर्य**[?]**त्वानापादनमेकम् । वैराग्याभावेन काकवाशितवत् निष्प्रयोजनत्वानापादनं द्वितीयम् । प्रयोजनान्तरलोभेन गणिकालङ्कारवत् फल्गुत्वानापादनं तृतीयम् । अर्थतृष्णयैव विक्रेयगन्धवत् कृत्रिमत्वानापादनं तुरीयम् । योग्यायोग्यविवेकवैधुर्येण परिषत्पृथुकभारसाम्यतानापादनं पञ्चमम् । अपात्रोपदेशेन कपिकरगतकुसुममालासादृश्यानापादनं षष्ठम् । इत्यादीनि ॥

व्यपदेशोपि वसिष्ठव्यपदेशन्यायेन आचार्यव्यपदेशः समुपादेयः। उपदेशोपि गुरुपरंपराप्रकाशपूर्वकः कृतज्ञत्यानुसन्धानपूर्वकः उपदेष्टव्यार्थमाहात्म्यसूचनपूर्वक**[??]** कर्तव्यः । एवंविधनियमसहस्रतो **[???]**-तरेण पुस्तकनिरीक्षणान्तर्धानश्रवणादिना गृहीतमपि ज्ञानं चौर्यलब्धाभरणालङ्करणमिव

साध्वसमेव पदे पदे समुत्पादयेज्जनयेच्च प्रत्यवायम् । आचार्यसकाशादपि गृहीतं प्रणिपातादिनियमरहितं चेत् कालपुरुषप्रतिग्रहलब्धाभरणालङ्करणवत् जुगुप्सामनर्थं चापादयेत् । एवं न्यायागतस्याप्यर्थस्य अन्येषामुपदेशः गुरुप्रकाशरहितश्चेत् मूलसन्देहेन शिष्यस्यातिशङ्कनम्, अनादरणीयत्वं ज्ञानवैशद्यपूर्वकभगवदनुभवलक्षणसम्पद्विनाशः आत्मसत्ताहेतुभूतशेषत्वानुसन्धानपूर्वकस्वनिष्ठालक्षणाय क्षयश्च भवेयुः । गुरुप्रकाशसहितोप्युपदेशः गुरूपदेशविरुद्धश्चेत् विप्रलम्भकत्वमशास्त्रीयोपदेशेन पापिष्ठत्वं च आपादयेत् ॥

सच्छिष्यस्य प्राप्तेप्यवसरे न कृतश्चेदुपदेशः लुब्धत्वं भगवदाज्ञातिलङ्घित्वं च स्याताम् । तस्माद्यथा राजसमीपे प्रदीपवाहः कस्मिंश्चित्कार्यान्तरे राज्ञा नियुक्तस्सन् तादृशदीपवहनसमर्थस्य प्राप्तस्य अपरस्य कस्यचित्करे प्रदीपं प्रदायापसरति तथा प्राप्ते सुपात्रे स्वाचार्येण उपदिष्टमेव आचार्यप्रकाशनपुरस्सरमुपदिशेत् । कारणान्तरविशेषेण समधिगतमप्यर्थविशेषं व्यासप्रसादन्यायेन अधिगतमित्यवबुद्ध्य उपदिशेत् न तु सामर्थ्यविशेषेणेति । तथा च सति सर्वैरादरणीयतमोयमर्थस्स्यात् । स्वयमपि कृतज्ञमूर्धन्य इति सात्विकैः प्रशंसनीयः स्यात् । सत्यधर्मेति उपनिषद्भिः औपनिषदेन परमपुरुषेण स्वसदृशप्रमाणभूत इति आदरणीयश्च भवेत् ॥

## ॥ इति शिष्यकृत्यम् ॥

### ३२. निगमनाधिकारः

अथ शास्त्रनिगमनम् ।

इत्थं परमपुरुषार्थप्राप्त्युपायानुष्ठानौपयिकेन सदाचार्यकटाक्षातिशयेन सारं निष्कृष्यप्रधानप्रतितन्त्रानवधार्य अर्थपञ्चकं निश्चित्य तत्त्वत्रयं विविच्य देवता**[??]**मार्थ्यमधिगत्य मुमुक्षुर्भवति । **[??]**धिकारविभागमुपायविभागम् प्रपत्तियोग्यत्वं परिकरविभागं च विज्ञाय प्रपदनमनुष्ठाय कृतकृत्यो भवति । ततः स्वनिष्ठामभिज्ञाय उत्तरकृत्यं पुरुषार्थकानां शास्त्रीयनियमनम् अपराधपरिहारं च कुर्वन् स्थानविशेषे निवसन् निर्याणं प्राप्य गतिविशेषेणपरिपूर्णं परं ब्रह्मानुभवतीति रहस्यतमा अर्था अनुशिष्टाः ॥

एवमनुशिष्टा अर्थाः सिद्धसाध्योपाय**[???]**भ्यां व्यवस्थारक्षाभ्यां च स्थिरीकृताः । इत्थं स्थिरीकृतानामर्थानां पदयोजनाविभागेन रहस्यत्रयेऽनुसन्धानसरणिः प्रदर्शिता । एतेषामर्थानामविप्लवाय यथाशास्त्रं सम्प्रदायप्रवर्तनार्थं आचार्यकृत्यं शिष्यकृत्यं(३२) च निरूप्य शास्त्रमिदं परिसमाप्यते । एवमस्मिन् शास्त्रे समुपदिष्टाः सर्वेऽप्यर्थाः श्रुतिस्मृतिसम्प्रदायैः समीचीनानुकूलन्यायसहकृतैः अज्ञानसंशयविपर्ययाणामन्तरेण अवकाशलेशं यथाश्रुतं यथाहृदयमुपादिताः। प्रागुपदर्शितनियममनुसृत्य सत्सम्प्रदायनिष्ठसदाचार्यसकाशात् सम्यगुपसन्नैः श्रोतव्याश्च । श्रुतिस्मृतिशरणैः पूर्वाचार्यैः विशोधित**[??]**निरस्तापराधलेशावकाशे पथि विचरतां सर्वविधक्लेशविनाशं परमे**[???]** पत्युः सर्वेश्वरस्य चरणारविन्दयोः सर्वदेशसर्वकालसर्वावस्थोचित**[???]**तैकरूपनित्यकैङ्कर्यप्राप्तिश्च भवति । तस्मात् श्रीमन्नारायणस्य चरणावेव**[ ????]** दशायां चोपजीव्याविति सर्वं कल्याणतमम् ॥

॥ इति श्री रहस्यत्रयसारसङ्ग्रहे तृतीयः परिच्छेदः ॥

रहस्यत्रयसारार्थः संक्षेपात्समगृह्यत ।

लक्ष्मीपुरं श्रीनिवासदासेन सुधियां मुदे ॥